श्रीगणेशाय नमः ।

# मुहूर्तदीपकः ।

## सटीकः ।



मङ्गलाचरणम् ।

**प्रणम्यैकरदं देवं शारदां गुरुमेव च ।**
**मुहूर्तदीपकं कुर्वे बालाज्ञानतमोऽपहम् ॥ १ ॥**

श्रीगणेशाय नमः ॥ ग्रन्थकर्ता कथयति—अहं मुहूर्तदीपकं कुर्वे; मुहूर्तान् जातकर्मादिसंस्कारसमयान् दीपयतीति, किं कृत्वा एकरदं देवं गणेशं च परं शारदां सरस्वतीं गुरुं च प्रणम्य, किंलक्षणं मुहूर्तदीपकं बालानाम् अज्ञानमेव तमः तदपहन्तीति बालाज्ञानतमोपहः तम् ॥ १ ॥

नन्दादितिथिषु त्याज्यानि ।

**नन्दाभद्राजयाख्याः प्रतिपदभिमुखा रिक्तिकाः स्युश्च पूर्णाः संज्ञातुल्यार्थकृत्या भृगुविदवनिजार्कीज्यवारेषु सिद्धाः । स्त्रीसेवाक्षौरतैलामिषमशुभममाभूतषष्ठ्यष्टमीषु स्नानं नाशाक्षिविश्वैः परिमिततिथिषु त्रिंशदंकाद्रितुल्ये ॥ २ ॥**

प्रतिपदभिमुखास्तिथयो नन्दाभद्राजयाख्याश्च परं रिक्तिकाः पूर्णाः स्युः । प्रतिपत् अभिमुखा यासां ताः, अत्र बहुवचनं तिस्रो नन्दाख्याः, तिस्रो भद्राख्याः, तिस्रो जयाख्याः, तिस्रो रिक्तिकास्तिस्रः पूर्णाः, एताः संज्ञातुल्यार्थकृत्याः संज्ञातुल्यम् अर्थकृत्यं कार्यनिष्पत्तिर्यासु ताः, एता एव नन्दाद्याः भृगुविदवनिजार्कीज्यवारेषु चेद्भवन्ति तदा सिद्धाः स्युः । ' नन्दा शुक्रे बुधे भद्रा जया भौमे शनेर्दिने । रिक्ता पूर्णा गुरोर्वारे सिद्धाः स्युस्तिथयः क्रमात् ॥' अमाभूतषष्ठ्यष्टमीषु क्रमेण स्त्रीसेवाक्षौर-तैलामिषम् अशुभं वर्ज्यमेव । यदुक्तम्—' षष्ठीषु तैलं पलमष्टमीषु क्षौर-क्रियां चैव चतुर्दशीषु । स्त्रीसेवनं नष्टकलासु पुंसामायुःक्षयार्थं मुनयो वदन्ति ॥ ' आशाक्षिविश्वैः आशा दश १०, अक्षिणी द्वे २, विश्वे त्रयोदश १३, एतैः परिमिततिथिषु दशमीद्वितीयात्रयोदशीषु त्रिंशत् ३० अंकाः ९ अद्रयः ७ तैः तुल्ये तिथौ दर्शनवमीसप्तमीष्वामलकस्नानं न कार्यम् । तदुक्तम्—' स्नातुर्जनस्य दशमी तनयं त्रयोदश्यर्थं निहन्त्यु-भयमेवमपि द्वितीया । सप्तम्यनिन्दुनवमीषु च संपदिच्छुः स्नायात्कदा-चिदपि नामलकैर्मनुष्यः ॥ ' इति ॥ २ ॥

### शुभकार्ये त्याज्याः दग्धतिथयः ।

**दग्धा युग्मा विभूता गतवति तरणौ चापमीने घटोक्ष्णे कर्काजे स्त्रीनृयुग्मे मृगपतिसविषे तौलि-नक्रे क्रमेण । नंदाद्या रिक्तिकान्तास्त्रिरजभमुखतः**

**स्युश्चतुर्णां च पूर्णा नेष्टा सक्रूरराशेः प्रतिपदि च कुहौ दन्तकाष्ठं न षष्ठ्याम् ॥ ३ ॥**

दग्धा इति । विभूताश्चतुर्दशीरहिताः युग्माः तिथयः द्वितीयाचतुर्थी षष्ठ्यष्टमीदशमीद्वादश्यः क्रमेण दग्धाः स्युः, किं सति तरणौ सूर्ये वक्ष्यमाणराशियुग्मे गतवति सति, तद्यथा—चापमीने तरणौ द्वितीया दग्धा, चापमीनमिति समाहारद्वंद्वः । घटोक्ष्णे कुंभवृषयोस्तरणौ गते चतुर्थी दग्धा, अत्रेतरेतरद्वंद्वः । कर्काजे कर्किणि मेषे तरणौ सति षष्ठी दग्धा । कन्यानृयुग्मे कन्यामिथुनयोरष्टमी दग्धा । मृगपतिसविषे सिंह- वृश्चिके रवौ दशमी दग्धा । तौलिनक्रे तुलामकरे द्वादशी दग्धा निषिद्धा । तदुक्तम्—'मीने चापे द्वितीया च चतुर्थी वृषकुंभयोः । मेषकर्कटयोः षष्ठी कन्यायां मिथुनेऽष्टमी ॥ दशमी वृश्चिके सिंहे द्वादशी घटनक्रयोः । एताः स्युस्तिथयो दग्धा द्विद्विराशिस्थिते रवौ ॥' च परं नंदाद्या रिक्तिकांताश्चतस्रस्तिथयः त्रिवारं त्रिरावृत्त्या अजभमुखतः राशीनां स्युः प्राक् नंदा मेषस्य भद्रा वृषस्य जया मिथुनस्य रिक्तिका कर्कस्य चतुर्णां राशीनां पूर्णा प्रहरद्वयं द्वयं मेषादीनां पंचम्याः । एवं सिंहादीनां चतुर्णां षष्ठ्यादयस्तथा दशमी सिंहादीनां चतुर्णां पुनरेकादश्याद्याश्चतस्रो धनु- रादिचतुर्णां राशीनां तिथयः । पुनः पूर्णा पूर्णमासीदर्शौ धनुरादीनां भवतः । एवं सपादतिथेरेको राशी राश्याधिक्यसंज्ञेयं सक्रूरराशेः, क्रूरेण रविकुजमन्दराहूणामेकतमेन सहितो यो राशिस्तत्संबंधिनी या तिथिः सा नेष्टा शुभकार्ये च परं प्रतिपदि कुहौ दर्शे षष्ठ्यां दंतकाष्ठं न कार्यम् ।

तथा चोक्तम्—'नष्टेंदुषष्ठीप्रतिपत्सु धीमान् न जातु दन्तोत्कषणं विदध्यात्।
कुर्वन्नवाप्नोति तदा स नूनं लक्ष्मीकुलज्ञातिजयोपघातम् ॥' इति॥ ३॥

नक्षत्रस्वामिनः ।

**भेशा दस्रांतकाग्निद्रुहिणशशिशिवा देवसूरीज्य-
सर्पाः पित्राख्याः स्युर्भगोऽथार्यमरविदिविषत्सू-
त्रकारानिलाश्च । शक्राग्नी मित्र इंद्रो निर्ऋति-
तनुभुवो वारि विश्वे विधाता श्रीशो वस्वाख्य-
यादःपतिरजपदहिर्बुध्न्यपूषाभिधानाः ॥ ४ ॥**

भेशा इति । एते भेशा भानां नक्षत्राणाम् ईशा ज्ञेयाः । ते के दस्रौ अश्विनीकुमरौ, अश्विन्या अश्विनौ पती, अंतको यमो भरण्याः, अग्निः कृत्तिकायाः, द्रुहिणो ब्रह्मा रोहिण्याः, शशी मृगशीर्षस्य, शिवः आर्द्रायाः, अत्रेतरेतरद्वंद्वः । देवसूः देवान् सूते सा देवसूरिति अदितिः पुनर्वसोः, ईज्यो गुरुः पुष्यस्य, सर्पा आश्लेषायाः, पित्राख्याः पितरो मघायाः, भगः सूर्यविशेषः पूर्वाफाल्गुन्याः, अर्यमा उत्तराफाल्गुन्याः, रविर्हस्तस्य, दिविषत्सूत्रकारः दिविषदो देवाः तेषां सूत्रकारो वार्धुषीव विश्वकर्मा चित्रायाः, अनिलो वायुः स्वातेः, शक्राग्नी शक्रश्च अग्निश्च शक्राग्नी द्वावपि विशाखायाः, मित्रः सूर्यभेदः अनुराधायाः, इंद्रो ज्येष्ठायाः, निर्ऋतितनुभुवो राक्षसाः मूलस्य, वारि जलं पूर्वाषाढायाः, विश्वेदेवा उत्तराषाढायाः, विधाता अभिजितः, श्रीशो विष्णुः श्रवणस्य, वस्वाख्या वसवो धनिष्ठायाः, यादःपतिर्वरुणः शततार-

कायाः, अजपत् अजैकपाद् महादेवभेदः पूर्वाभाद्रपदायाः, अहिर्बुध्न्यः उत्तराभाद्रपदायाः, पूषा सूर्यभेदो रेवत्याः, इत्यष्टाविंशतिदेवतास्तन्नाम्ना भानां नामानि कल्प्यानि ॥ ४ ॥

चरादिसंज्ञाविचारः।

**स्वात्यादित्यहरित्रयं चरचलं धात्रोत्तरा ध्रुस्थिराः**
**क्रूरोग्रं पितृपूर्विकान्तकमथ द्वीशानले मिश्रके।**
**हस्तेज्याश्व्यभिजिल्लघुर्मृगशिरश्चित्रांत्यमैत्रं मृदु**
**ज्येष्ठार्द्रोरगमूलमेतदुदितं तीक्ष्णं शशीनारतः ॥५॥**

स्वातिः, आदित्यम् अदितेरिदमादित्यं पुनर्वसुः, हरित्रयं हरिशब्देन हरिभं श्रवणो ग्राह्यः। इदं सांकेतिकं शास्त्रं नामैकदेशग्रहणे नामग्रहणम्। श्रवणत्रयं श्रवणधनिष्ठाशततारा एतत् नक्षत्रपंचकं चरचलसंज्ञं भवति। धात्रं रोहिणी उतरास्तिस्र एताः ध्रु ध्रुवाः स्थिराश्च भवंति। पितृमघा-पूर्विकास्तिस्रः अन्तकं भरणी एतत्पञ्चकं क्रूरमुग्रसंज्ञं भवति। अथ द्वीशं विशाखा अनलं कृत्तिका एते मिश्रसंज्ञे, हस्तः ईज्यं पुष्यः अश्वि अश्विनी अभिजित् अयं गणो लघुर्भवति, मृगशिरः चित्रा अन्त्यं रेवती मैत्रमनुराधा एतत् चतुष्कं मृदु। ज्येष्ठा आर्द्रा उरगमाश्लेषा मूलं एतत्तीक्ष्णम् उदितं कथितं नामसप्तकं चरचलादि एतत्, शशी चन्द्रः इनः सूर्यः आरो भौमः, ततो ज्ञेयं एतदुक्तं भवति चंद्रश्चलश्चरः, रविः स्थिरो ध्रुवः, भौमः क्रूरोग्रः, बुधो मिश्रः, गुरुर्लघुः, शुक्रो मृदुः, शनि स्तीक्ष्णः, एवं नक्षत्रनामानि। तच्चोक्तम्—' रविः स्थिरः शीतकरश्चरश्च

महीज उग्रः शशिजश्च मिश्रः । लघुः सुरेज्यो भृगुजो मृदुश्च तीक्ष्णोऽर्कसूनुः कथितो मुनीन्द्रैः ॥ ' इति ॥ ५ ॥

उत्पातादियोगविचारः ।

**द्वीशात्त्रीण्युदकोड्डुतो वसुभतः पौष्ण्यात्कभाज्जीवभादार्यम्णाद्रवितस्त्यजेद्यममघे त्वाष्ट्राद्विदैवे तथा । वैश्वार्द्रे वसुमूलकेऽनलशते ज्येष्ठाकभेऽम्बुद्वयं सूर्येऽष्टौ विदि पंच वारतिथिजान् विश्वान् समस्तेष्विति ॥ ६ ॥**

रवितो रविवारात् क्रमेण सप्तवारेषु एतानि भानि त्यजेत् शुभकार्येष्विति शेषः । तत्र रविवारे द्वीशात्त्रीणि विशाखायास्त्रीणि विशाखा अनुराधा ज्येष्ठा इति त्रीणि भानि त्यजेत् । सोमवारे उदकोड्डुतः पूर्वाषाढायास्त्रीणि पूर्वाषाढोत्तराषाढाऽभिजितः। भौमवारे वसुभतो धनिष्ठायास्त्रीणि धनिष्ठाशतभिषक्पूर्वाभाद्रपदास्त्यजेत् । बुधवारे पौष्णाद्रेवत्यास्त्रीणि रेवत्यश्विनीभरणीस्त्यजेत् । गुरुवारे कभाद्रोहिण्यास्त्रीणि रोहिणीमृगार्द्रास्त्यजेत् । शुक्रवारे जीवभात् पुष्यात्त्रीणि उत्तराफाल्गुनीहस्तचित्रास्त्यजेत् । शनिवारे आर्यम्णात् उत्तराफाल्गुन्यास्त्रीणि पुष्याश्लेषामघा चित्रास्त्यजेत् । एतेन उत्पातमृत्युकाणयोगा उक्ताः । तथा तथैव रवितो द्वे द्वे भे त्यजेत् । ते के, यममघे भरणीमघे रविवारे त्यजेत्, सोमवारे त्वाष्ट्रद्विदैवे चित्राविशाखे, भौमवारे वैश्वार्द्रे उत्तराषाढाऽऽर्द्रे, बुधवारे वसुमूलके धनिष्ठामूले त्यजेत्, गुरुवारेऽनलशते कृत्तिकाशततारके त्यजेत् । भृगु-

वारे ज्येष्ठाकभे ज्येष्ठारोहिण्यौ, शनिवारे बुधद्वयं पूर्वाषाढाद्वयं पूर्वाषाढोत्तराषाढे त्याज्ये। अत्र त्याज्यप्रकरणाद्यस्मिन् वारे यत् त्याज्यं तदेवमुक्तम्। तत्र शनिवारे केचन रेवतीं हस्तं च जन्मभं यमघंटयोगाख्यया वदंति, तन्निर्मूलम्। यतः हस्ते मृत्युयोगस्य प्राक्कथनात् प्राचीनाचार्यत्रिविक्रमेण लिखितमस्ति, अतः त्रिविक्रममते शनौ त्याज्यं 'शनेर्द्वे वर्ज्यमाषाढे द्वादशाभाग्यं तथा।' तेनाषाढाद्वयं निषिद्धम्। अथ सूर्ये रविवारे प्रथमे वारे सप्तमी तिथी अनयोर्योगेऽष्टौ भवंति। एवं विदि बुधे तुर्ये वारे प्रतिपत्तिथी अनयोर्योगे पंच त्याज्याः, एवं समस्तेषु तिथिवारजान् विश्वान् त्रयोदश त्यजेत् एवं द्वादशीं रविवारे एकादशीं सोमवारे दशमीं भौमवासरे नवमीं बुधवासरे अष्टमीं गुरौ सप्तमीं शुक्रे षष्ठीं शनिवारे त्यजेदिति संवर्त्तक्रकचावुक्तौ। इत्युत्पातमृत्युकाणजन्मभयमघंटसंवर्त्तक्रकचयोगाः ॥ ६ ॥

अथ वारप्रवृत्तिहोरार्द्धयामकुलिकाः।

**रात्र्यर्द्धं द्युयुतं सपादमनुयुक् वारप्रवृत्तिस्ततो**
**होरा सार्द्धघटिद्वया दिनपतेः षष्ठस्य षष्ठस्य सा।**
**तुर्याद्रिद्विशराष्टरामरसकं यामार्द्धमुज्झेद्रवेस्ति-**
**थ्यंशः कुलिको मनूत्क्रमसमो घस्रे निरेको निशि॥७॥**

रात्रेरर्द्धं रात्रीणामर्द्धं द्युयुतं दिनमानेन युतं कार्यं पश्चात्सपादाः पंचदशपलसहिताः चतुर्दशघटिकास्ताभिः युक् युक्तं कार्यं तदा वारप्रवृत्तिः स्यात् षष्टितो न्यूने रात्रिशेषे षष्टितोऽधिके सूर्योदयादूर्ध्वं ततो

वारप्रवृत्तेः सकाशात् होरा भवति । किंलक्षणा ? सार्द्धघटिद्वयात् सार्द्धं घटिद्वयं यस्याः सा, सा दिनपतेर्दिनवाराद्ग्रहाणां होरा भवति तद्यथा- प्रथमा दिनविभोः द्वितीया तस्मात्षष्ठस्य ततोऽपि षष्ठस्य एवं चतुर्विंशतिहोरा अहोरात्रे स्युः । तथा च श्रीपतिः—'वारप्रवृत्तेर्घटिका द्विनिघ्नाः कालाख्यहोरापतयः शराप्ताः । दिनाधिपाद्या रविशुक्रसौम्याः शशांकसौरीज्यकुजाः क्रमेण ॥' इति, दिनाधिपाद्गणनीयाः, तासां मध्ये चंद्रबुधजीवशुक्राणां होराः श्रेष्ठाः । रविकुजमंदानां होराः सामान्याः अतो मध्याः । [ 'यस्य ग्रहस्य यद्वारे किंचित्कर्म प्रकीर्त्तितम् । तत्तस्य कालहोरायां सर्वमेव विधीयते ॥' इति श्रीपत्युक्तिः । ]अथ रवेः सकाशात् यामार्द्धं त्यजेत् कतितमं तुर्याद्रिद्विशराष्टरामरसकं तुर्यं चतुर्थं रविवारे सोमवारेऽद्रि—सप्तमितं भौमे द्विमितं बुधे शरमितं पंचमं जीवे अष्टमितं शुक्रवारे राममितं त्रितयं शनिवारे रसमितं षष्ठम् । इयं वारवेला निषिद्धा पुनः रवेः सकाशात् तिथ्यंशो मुहूर्तः । दिनमानस्य पञ्चदशभागो मुहूर्तः स कुलिको भवति । घस्ने दिवसे कतिमितः मनूत्क्रमसमः मनुतश्चतुर्दशतः उत्क्रमेण व्यस्ततया समः समसंख्यः स कुलिको ज्ञेयः ॥ रविवारे चतुर्दशो मुहूर्त्तः, सोमवारे द्वादशः, भौमवारे दशमः, बुधवारेऽष्टमः, गुरुवारे षष्ठः, शुक्रवारे तुर्यः, शनिवारे द्वितीयः । निशि रात्रौ निरेकः, रविरात्रौ त्रयोदशः, सोमरात्रौ चैकादशः, भौमरात्रौ नवमः, बुधरात्रौ सप्तमः, गुरुरात्रौ पंचमः, शुक्ररात्रौ तृतीयः, शनिरात्रौ प्रथमः, एते कुलिकाः शुभकार्ये निषिद्धाः । तथा चोक्तम्—' मन्वर्कदिग्वसृतु-

वेदपक्षैरर्कान्मुहूर्तैः कुलिका भवंति । दिवा निरेको ह्यथ यामिनीषु ते गर्हिताः कर्मसु शोभनेषु ॥' इति । यदुक्तं श्रीपतिना—' यस्य ग्रहस्य वारेऽपि यत्कर्म परिकीर्तितम् । तत्तस्य कालहोरायां सर्वमेव विधीयते ॥' इति आवश्यककृत्ये श्रीपतिवचने ॥ ७ ॥

अथ विष्टिः ।

**शुक्लेऽब्धीशमिते तिथौ परदले प्रागष्टमीराकयो-र्विष्टिः कृष्णदले त्रिदिक्षु परतः प्राक् सप्तमी-भूतयोः । तद्वक्त्रं शरदोर्नगांबुधिवसुत्र्यंगैक-यामादितः पुच्छं शस्तमिभेंदुषड्गुणनगद्वीष्वब्धि-यामात्यये ॥ ८ ॥**

शुक्ल इति । शुक्ले पक्षेऽब्धीशमिते चतुरेकादशमिते तिथौ चतुर्थ्ये-कादश्योः परतः पश्चिमार्द्धे विष्टिः, अष्टमीराकयोस्तत्रैव शुक्ले प्राग्दले विष्टिः, कृष्णदले कृष्णपक्षे त्रिदिक्षु तृतीयादशम्योः पश्चिमार्द्धे विष्टिः, सप्तमीभूतयोः परतः कृष्णे प्राग्दले विष्टिः, तस्याः विष्टेः वक्त्रं शरदो-र्नगांबुधिवसुत्र्यंगैकयामादितः पंचघटिकात्मकं वक्त्रं भवति । अत्र मानक्रमेण विष्टयो ग्राह्याः चतुर्थ्यष्टम्येकादशीपौर्णमासीतृतीयासप्तमी-चतुर्दशीषु चतुर्थ्यां पंचमप्रहरे मुखम् अष्टम्यां द्वितीययामादौ, एकादश्यां सप्तमयामादौ, पूर्णिमायां चतुर्थयामादौ, कृष्णतृतीयायाम् अष्टमयामादौ, सप्तम्यां तृतीययामादौ, दशम्यां षष्ठयामादौ, चतुर्दश्यां प्रथमयामादौ, पचघट्यात्मकं विष्टेर्मुखं भवति, तत्पुच्छं तत्कदा भवेत् चतुर्थीतः क्रमेण

इभेंदुषड्गुणनगद्वीष्वब्धियामात्यये चतुर्थ्यामष्टमयामांते घटिकात्मकं विष्टेः पुच्छम् । अष्टम्यां प्रथमयामांते, एकादश्यां षष्ठयामांते, पौर्णमास्यां तृतीययामांते, सप्तम्यां सप्तमयामांते, दशम्यां द्वितीययामांते विष्टेः पुच्छं, चतुर्दश्यां चतुर्थयामांते विष्टेः पुच्छम् । तथा चोक्तम्—' दशम्यामष्टम्यां प्रथमघटिकापंचकपरं हरिद्युःसप्तम्योस्त्रिदशघटिकातस्त्रिघटिकम् । तृतीयाराकायां कुयमघटिकाभ्यः परतरं ध्रुवं विष्टेः पुच्छं शिवतिथिचतुर्थ्योस्तु विगमे ॥ ' विष्टे रत्नमालायामपि मुखमेव यामादौ कथितमस्ति तदंगमपि । ' नाडयस्तु पंच वदनं गलकस्तथैका वक्षो दशैकसहिता घटिकाश्चतस्रः । नाभिः कटी षडथ पुच्छलताऽत्र तिस्रो विष्टेर्बुधैर्निगदितोऽङ्गविभाग एषः ॥ ' उक्तं च—' मुखे कार्यध्वस्तिर्भवति मरणं चापि गलके धने हानिर्वक्षःस्थलकटितटे बुद्धिविलयः । कलिर्नाभीदेशे विजयमथ पुच्छे निगदितः शरीरे भद्रायाः पृथगिति फलं पूर्वमुनिभिः ॥'

अथ **विष्टेः स्वरूपमाह**—' दैत्येंद्रैः समरे सुरेषु विजितेष्वीशः क्रुधा दृष्टवान् स्वं कार्यं कलिनिर्गता खरमुखी लांगूलिनी च त्रिपात् । विष्टिः सप्तभुजा मृगेंद्रगलका क्षामोदरी प्रेतगा दैत्यघ्नी मुदितैः सुरैस्तु करणप्रांते नियुक्ता सदा ॥ ' ॥ ८ ॥

अथ दिनरात्रिभवास्त्रिंशन्मुहूर्ताः ।

**रुद्राशीविषमित्रपितृवसुवार्विश्वेऽभिजित्केंद्रपाः**
**शक्राग्नी निर्ऋतिर्दिने तिथिलवाः पाश्यर्यमाख्यो**
**भगः । रात्रौ शंभुरजांघ्रितस्त्वयमगा दास्राद्-**

**विरौद्रा हरिः सूर्यत्वाष्ट्रसमीरणा निजभजे कार्ये स्मृताः सिद्धिदाः ॥ ९ ॥**

रौद्रेति । एते दिने तिथिलवाः मुहूर्ता भवंति दिनमानस्य पंचदशो विभागः मुहूर्तो ज्ञेयः स मुहूर्तः क्रमेण रुद्रादीनां पंचदशदेवतानां वा तत्तन्नामकनक्षत्रसंबंधी भवति । ते के रुद्राशीविष इत्यादयः । सर्वदा प्रथममुहूर्तः रुद्रस्य भवति, आर्द्रासंबंधीत्यर्थः । द्वितीयः आशीविषाणां सर्पाणाम् आश्लेषासंबंधी भवति, पंचमो वसुदैवतो धनिष्ठासंबंधी भवति, षष्ठो वार्दैवतः पूर्वाषाढासंबंधी भवति, सप्तमो विश्वदैवत उत्तराषाढासंबंधी भवति, अष्टमोऽभिजिन्मुहूर्तः, नवमः कमदैवतो रोहिणीसंबंधी भवति, दशमः इंद्रदैवतो ज्येष्ठासंबंधी भवति, एकादशः शक्राग्निदैवतः विशाखासंबंधी भवति, द्वादशो नैर्ऋतिदैवतो मूलसंबंधी भवति, त्रयोदशः पाशिदैवतो वरुणदैवतः शततारकासंबंधी भवति, चतुर्दशो यमदैवतः उत्तराफाल्गुनीसंबंधी भवति, पंचदशो भगदैवतः पूर्वाफाल्गुनीसंबंधी भवति, एते दिने मुहूर्ताः भवंति । रात्रौ शंभुरार्द्रा, अजांघ्रितः पूर्वाभाद्रपदातस्त्रयं पूर्वाभाद्रपदा उत्तरभाद्रपदा रेवती, दास्राद्विरौद्रा आर्द्रारहिताः सप्त, अश्विनी भरणी कृत्तिका रोहिणी मृगशिरः पुनर्वसुः पुष्यः हरिः श्रवणः सूर्यो हस्तः त्वाष्ट्र चित्रा समीरणो वायुदैवतः स्वाती एते मुहूर्ताः निजभजे स्वनक्षत्रभवे कार्ये सिद्धिदाः स्मृताः । आवश्यकं कार्यं यत्र नक्षत्रे कथितं वर्तते तस्य मुहूर्त्ते कर्तव्यम् । तदुक्तं रत्नमालायाम्—‘यस्मिन् धिष्ण्ये यच्च कर्मोपदिष्टं तद्दैवत्ये

तन्मुहूर्तेऽपि कार्यम् । ' इति । लोके हि स्वामिसदृष्टे सेवके प्रयुज्यमानं दृश्यते अतो देवता सदृष्टं तन्नक्षत्रे कार्यमिति तिथ्यादिषूपचर्यते । तथा च दृष्टयोगदर्शनम् ॥ ९ ॥

अथ बाणपंचकम् ।

**लग्नाढ्यास्तिथयो गता नवहृताः खत्रीष्वगे शेषके न स्यात्पंचकमेकके मृतिरथो हौताशनं स्याद्वयोः । तुर्ये राजकमंगके हृतिरथोऽष्टाभी रुगाख्यं त्यजेदुद्वाहे सदनेषु सेवनविधौ मार्गे व्रतेषु क्रमात् ॥ १० ॥**

लग्नाढ्या इति । मासादितो यास्तिथयः गताः तिथयो लग्नाढ्याः कार्याः आरंभकालीनलग्नाङ्केन युता नवहृताः नवभिर्हृते भक्ते ख० त्रि ३ इषु ५ अगे ७ शेषके पंचकं न भवति । एकशेषे मृतिर्भवति मृत्युपंचकं भवेत् । अथ द्वयोः शेषयोः सतोः हौताशनं वह्निपंचकं भवेत् । तुर्ये चतुष्के शेषके, राजपंचकं भवति । अंगके षट्शेषे हृतिश्चोरपंचकं भवेत् । अष्टाभिः शेषे रुगाख्यं भवेत् रोगपंचकं भवति । एतानि क्रमात् उद्वाहे विवाहे मृतिपंचकं, सदनेषु हुताशनपंचकं, सेवाविधौ राजपंचकम्, मार्गे हृतिपंचकं त्याज्यं, व्रतेषु व्रतबंधादिषु रुगाख्यं रोगपंचकं त्यजेत् । उक्तं च–' व्रते रोगं पथे चौरं सेवायां राजपंचकम् । गृहे चाग्निं परित्यज्य विवाहे मृत्युपंचकम् ॥ ' इति ॥ १० ॥

अथैकार्गलचंडायुधौ ।

**गंशूव्यातिविवेषु षट्शरनवांगत्रित्रिनाडीः पुरा**
**सर्वौत्यव्यतिपातकौ च परिघार्ध पूर्वमुज्झेच्छुभे ।**
**योगेष्वेष्विनभाद्विधुर्विषमभे विध्यृक्षयुक्तेऽर्गला**
**स्याच्चंडीश्वरशस्त्रपात इह सागंशूव्यवैहांतभे ॥११॥**

गंशूव्येति । एषु योगेषु पुरा प्रथमाः एताः नाडीः त्यजेत् । केषु काः ? गं गंडः शू शूलः व्या व्याघातः, अति अतिगंडः, वि विष्कंभः, व वज्रयोगः, एषु पुरा पूर्वाः षट्शरनवांगत्रित्रिनाडीः त्यजेत् । शुभे शुभकार्ये सर्वौ च तौ अन्त्यव्यतीपातकौ त्यजेत् वैधृतिव्यतीपातौ सर्वावपि । पूर्वं परिघार्द्धं परिघस्य पूर्वार्धमित्यर्थः । एषु प्रागुक्तयोगेषु गंशूव्यातिविवैव्यपरिघेषु सत्सु इनभात् सूर्यभात् विध्यृक्षयुक्ते अभिजित् तत्सहितगणिते सति विषमभे यदा विधुर्भवति तदाऽर्गला एकार्गलयोगो भवति । इह चंडीश्वरशस्त्रपातः स्यात् इह क सा साध्यः गं गंडः शू शूलः व्य व्यतीपातः वै वैधृतिः ह हर्षणः एषां योगानां अंते यद्भं तत्र । तथा चोक्तम्—साध्यहर्षणशूलानां वैधृतिव्यतिपातयोः । यद्भं गंडस्य जाते स्यात्तत्पातेन निपातितम् ॥' एवमेवैकार्गलहरायुधयोगौ कथितौ ॥११॥

अथ लत्तापंचशलाकावेधः ।

**अर्कत्रीभनखेषु भेषु दिनकृद्भौमार्क्यगूनां पुरो**
**लत्ता सप्त च तिर्यगूर्द्धगतिका रेखा लिखेदग्नि-**
**भात् । वेधोऽत्रैकगयोरथोद्वहविधौ पंचोर्द्धतिर्य-**

**ग्गता द्वे द्वे कोणगतेऽत्र विध्यति खगाः कोणे द्विरेखेऽग्निभात् ॥ १२ ॥**

दिनकृद्भौमार्क्यगूनां रविभौमशनिराहूणां पुरः पुरस्तात् एतेषु भेषु नक्षत्रेषु लत्ता स्यात् । एतेषु केषु अर्कत्रिभनखेषु अर्का द्वादश त्रीणि इभा अष्टौ नखा विंशतिस्तेषु अत्राशुभानां लत्ता कथिता यतः । ' उडुनि निर्दलिते शुभलत्तया न फलमस्ति बलस्य च लत्तया । अशुभलत्तितमत्ति तदूढयोर्धनसुतानसुतायकरं परम् ॥ ' च परं तिर्यगूर्ध्वगतिकाः सप्त रेखाः लिखेत् अत्रैकरेखागतयोर्ग्रहयोः सतोर्वेधो भवति. स वेधो व्रतबंधदेवप्रतिष्ठाचौलादिषु त्याज्यः । अथोद्वाहविधौ विवाहे पंच पंच ऊर्ध्वतिर्यग्गता रेखा लिखेत्, द्वे द्वे रेखे कोणगते लेख्ये अत्रापि खगो ग्रहः कोणस्य ईशकोणस्थद्विमिताया रेखायाः तत्राग्निभात् स्थितो विध्यति; तत्र सर्वेषामेव वेधस्त्याज्यः । तत्र रोहिण्यां कथं वेधः स्यात् अभिजिति ग्रहे स्थिते रोहिणी विद्धा भवति अभिजित्कथं भवति वैश्वदेवतः चतुर्लवः श्रवणस्य पंचभू १५ लवः इह अभिजिति उत्तराषाढायाः प्रांत्योऽङ्घ्रिः श्रवणस्य पंचदशो विभागः एतदभिजिद्भं भवति तत्रस्थे खेटे रोहिणीनां वेधो भवति ॥ १२ ॥

अथ ताराविचारः ।

**जन्मर्क्षाद्दिनभोन्मितिर्नवहृतास्तारास्त्रिबाणाद्र्यो नेष्टास्तद्बलतो विधुर्विधुबलादर्कोऽर्कवीर्यात्परे ।**
**ज्ञेयाः संक्रमणे फलायुतगमे सूर्यर्क्षतश्चंद्रभं भक्ताग्नैस्त्रिरसे भ्रमोऽम्बरयमे क्लेशे शुभश्चाडलः॥१३॥**

स्वकीयजन्मभात् जन्मनक्षत्रात् दिनभोन्मितिः दिननक्षत्रस्य संख्या कार्या, सा नवहृता नवभिर्हृता कार्या शेषा शेषमिता तारा भवति । तत्र नव ताराः शेषाः कस्माद्भवंति शून्यशेषमिताः नवसु त्रिबाणाद्रय-स्तृतीयापंचमीसप्तम्यो नेष्टाः शुभा न । तथा चोक्तम्–' जन्मसंपद्विप-त्क्षेमाः प्रत्यरिः साधका वधा । मैत्रातिमैत्रास्ताराः स्युस्त्रित्ववृत्त्या न चैव हि ॥ ' तद्बलतो विधुः ताराबलाद्विधुः फलदो भवति यादृशी यद्दिने तारा भवति तद्दिने चन्द्रस्तादृशं फलं ददाति, विधुबलादर्कः यादृशे चंद्रे सूर्यः संक्रमणं करोति तादृशं फलं सूर्यो ददाति, अर्क-वीर्यात् परे भौमादयः षट् संक्रमेण राशिसंक्रमेण फलदा ज्ञेयाः, यादृशे सूर्ये भौमबुधगुरुशुक्रशनिराहवो राशिसंक्रमणं कुर्वन्ति तादृशं स ग्रहः फलं ददाति तु पुनः गमे गमने सूर्यर्क्षतः सूर्यभात् चंद्रभं यावत्तमं भवति तद्गैः सप्तभिः भक्त्वा शेषं कार्यं त्रिरसे त्रिरसमिते शेषे भ्रमः भ्रमणयोगो भवति । अंबरयमे शून्यद्विशेषे अडलो योगो भवति । भ्रमोऽप्यशुभः अडलोऽप्यशुभः । इति त्याज्यप्रकरणम् ॥ १३ ॥

अथ विवाहमुहूर्तः ।

**रेवत्यां स्थिरमैत्रमूलमृगभे स्वातौ मघायां करे सौम्येऽर्के शफरोज्झिते तनुषडष्टेंदुं खलैर्युग्घ-तम् । विद्धं भं कुलिकार्गलापमतुलां रिक्तां कुहूं पक्षतिं विष्टिं यामदलं कुयोगकुदिनं त्यक्त्वा विवाहः शुभः ॥ १४ ॥**

रेवत्यां स्थिराणि रोहिण्युत्तरभानि मैत्रमनुराधा मूलं मृगभं एषां समाहारः तस्मिन् स्वातौ मघायां करे हस्ते, पुनः क सौम्येऽर्के सौम्यायन-गते रवौ किंलक्षणे सौम्यायने शफरोज्झिते शफरो मीनस्तदुज्झिते-ऽर्केण रहिते गोधूलिकलग्नं कुर्यात् । किं कृत्वा तनुषडष्टेंदुं त्यक्त्वा तनौ षष्टेऽष्टमे चन्द्रं त्यक्त्वा खलैः सूर्यभौमशनिराहुभिर्युक् युक्तं हतं लत्तितं विद्धं पंचशलाकाचक्रे विद्धं भं नक्षत्रं त्यक्त्वा कुलिको मनूत्क्रमसम इत्यादि अर्गला एकार्गलयोगः योगेष्वेष्विनभादित्यादि अपमतुलां क्रांतिसाम्यं त्यक्त्वा क्रांतिसाम्यं तु ब्रह्मतुल्ये पाताधिकारे समायाति । अन्यच्च-' शुक्रे खाब्धि ४० घटीष्वस्ति पातो ध्रुवस्य दिक्ष्व १० पि । प्रत्यब्दं गो ९ पलैर्हीनः खाद्रितिथ्युन्मिताच्छकात् १५७० ॥ ' कुहूममावास्यां रिक्ताम् अमासांनिध्यात्कृष्णां चतुर्दशीं पक्षतिं प्रतिपदम् । तदुक्तम्—'अमा-तिथिः पार्श्वतिथिद्वयेन समं न मांगल्यमुपादधाति । ' इति, विष्टिं भद्रां त्यक्त्वा यामदलं तुर्याद्रिद्विशराष्टमरसकमित्यादि यामदलं त्यक्त्वेत्यर्थः । कुयोगो मृत्युयमघंटादिः कुदिनमवमं तमपि त्यक्त्वा विवाहो भवति । पुनः क शफरोज्झिते मीनसंक्रांतिरहिते सौम्येऽर्के उत्तरायणगे सूर्ये अत्रोत्तरायणग्रहणं सौरमासादरार्थम् । तथा चोक्तम्—'रवेर्मीनमकरादिषड-ग्रही करग्रहे मंगलकृन्मृगीदृशाम् । ' इति केशवार्कः । तथापि सौम्यायनवशात्पौषचैत्रयोः शुक्लपक्षे न विवाहः । तथा चोक्तं विवाहप्रकाशे-' पौषे मृगगे सूर्ये परपक्षे चैत्रमास्यजर्क्षेऽर्के । उद्वाहः कर्तव्योऽन्यथा भवेत्तावनिष्टफलौ ॥ ' तत्रैव -' कार्तिकमासे शुद्धिं गुरोर्विलोक्य रवेश्चंद्र-

बलम् । अक्रूरयुते धिष्ण्ये देवोत्थानावशाहे स्यात् ॥ ' अत्र ग्रंथांतरे वक्ष्यमाणश्लोके चापार्कमीनार्कयाम्यायनसिंहस्थगुरुभृगुजीवयोरस्तबाल्यवृद्धत्वातिचारवक्रसमये परं सत्कार्यं न स्यादिति वक्ष्यति तस्मादत्र विवाहादौ गुरुशुक्रयोः शिशुत्वजरत्वे त्याज्ये । तद्यथा शिशुजरत्वमाह— ' शिशुजरत्वमहान्युदयाऽस्तयोर्दश चतुर्दश चांगिरसः स्फुटम् । उशनसो दश पंच च पश्चिमे गतिवशात्त्रिदशाहमपश्चिमे ॥ अष्टाविंशतिवासरान् सुरगुरोर्वक्रातिचारे त्यजेत्सिंहे पञ्चनवांशकान् मृगगते पंचैव नीचांशकान् । बाले वृद्धदशां गतेऽथ नियतं लुप्ताख्यसंवत्सरं सर्वं चास्तमिते सभीतिरहितः प्रोक्तं हि गर्गेण च ॥ अष्टमे द्वादशे वर्षे मासत्रयगते सति । विवाहं तत्र कुर्वीत गर्भमासविमिश्रणात् ॥ ' इत्यादि सर्वं विचार्य लग्नं कर्तव्यम् ॥ १४ ॥

अथ घटिकालग्नम् ।

**लग्ने मानवराशिगे नवलवे चार्कश्चतुर्वर्जिते षष्ठे लग्नपचंद्रशुक्ररहिते रंध्रे विधोः पंचभिः । हीनेऽथेंदुगुरू समौ मदगतौ पापोत्थकर्त्तर्यपि त्याज्या लग्नशशांकयोस्तनुलवौ तन्नाथदृष्टौ शुभौ ॥ १५ ॥**

पूर्वश्लोके एषु योगेषु विवाहः शुभ इत्युक्तमस्ति तत्र लग्नशुद्धिमाह—लग्ने मानवराशिगे इति । लग्ने मानवराशिगे मनुष्यराशिलग्ने मनुष्यराशय इति तुलामिथुनप्रमदाधनुःप्रथमखंडमखंडफलं जगुः वा मानवराशिगे नवलवे नवांशे लग्नस्य त्रिंशदंशाः तेषां नवांशः अंशः ३ कला २० एवं राशौ नवनवांशा भवंति । तेषां नवांशानां गणना

चतुर्भ्यो राशिभ्यो भवति । तद्यथा—'मेषान्मेषाश्वसिंहानां नक्राद्वृष-मृगस्त्रियः । घटात्कुंभत्रिजूकानां कर्कान्मीनालिकर्णिकाम् ॥' अनेन क्रमेण मानवराशिलवे मिथुनकन्यातुलाधनुषामन्यतमस्य नवांशे लग्नगे । किंभूते लग्ने आर्के: शनेः सकाशाच्चतुर्ग्रहवर्जिते शनिरविचंद्रभौमवर्जिते षष्ठे भवने चंद्रलग्नपतिशुक्ररहिते षष्ठे लग्नपो भंगदः चंद्रशुक्रौ च अष्टमे विधोः सकाशात्पंचभिर्हीने चंद्रमंगलबुधगुरुशुक्रवर्ज्य इत्यर्थः । अथेंदुगुरू चंद्रजीवौ तत्र लग्ने मदगतौ सप्तमगतौ समौ न निषिद्धौ न श्रेष्ठौ अन्ये सप्त ग्रहा जामित्रे भंगदाः । तथा चोक्तं त्रिविक्रमाचार्यैः—'त्याज्या लग्नेऽब्धयो मंदात्षष्ठे शुक्रेंदुलग्नपाः । रंध्रे चंद्रादयः पंच सप्तमेऽब्जगुरू समौ ॥' अथ लग्नशशांकयोः पापोत्थकर्त्तरी त्याज्या लग्नं पापद्वयमध्ये भवति चंद्रो वा पापद्वयमध्ये भवति एतद्द्वयं त्याज्यम् । तदुक्तम्—'खलकृता तनुरोहिणिनाथयोर्हरधरा विधुरां कुरुते वधूम् ।' तनुलवौ लग्ननवांशौ तन्नाथदृष्टौ शुभौ ॥ १९ ॥

### अथ वधूप्रवेशद्विरागमनमुहूर्तः ।

**स्वातौ मूललघुध्रुवे मृदुमघाकर्णे तथा वासवे**
**रिक्तां प्रोज्झ्य च भाद्रिकां रविबुधक्षोणीजवारां-**
**स्तथा । वध्वा वेश्मनि वेशनं शुभकरं शुक्रं**
**पुरो दक्षिणं त्यक्त्वाऽब्दे विषमे द्विरागमविधि-**
**र्यात्रातिथौ प्रोक्तभे ॥ १६ ॥**

स्वाताविति । एषु योगेषु वध्वा नवोढायाः गृहप्रवेशः शुभो भवति, क स्वातौ मूललघुध्रुवे मूलं लघूनि च हस्तेज्याश्व्यभिजितानि, ध्रुवाणि

षं रोहिण्युत्तरात्रयं एषां समाहारस्तत्र, मृदुमघाकर्णे मृदूनि मृगशिरश्चि- त्र्यन्त्यमैत्राणि च मघा च कर्णं श्रवणश्च एषां समाहारस्तत्र, तथा वासवे धनिष्ठायाम् । तत्र त्याज्यमाह—रिक्तां च भद्रिकां च भद्रातिथिं तथा रविबुधभौमवारान् प्रोज्झ्य त्यक्त्वा ॥ अब्दे विषमे तृतीये पंचमे शुक्रं पुरो दक्षिणं त्यक्त्वा द्विरागमविधिः प्रोक्तः । यात्रातिथौ रिक्तावर्जिततिथौ प्रोक्तभगणे स्वातौ मूलेत्यादिनोक्ते । अत्र देशाचाराद्दीपोत्सवे द्विरागमं कुर्वन्ति तत्र पठंति—' न शुक्रदोषो न च जीवदोषस्तारावलं चंद्रबलं न योज्यम् । द्विरागमादौ नवकन्यकाया दीपोत्सवे मंगलमामनंति॥'॥ १६॥

अथ प्रथमार्तवे शुभाशुभविचारः स्नानमुहूर्तश्च ।

**मासा भाद्रमधूर्जपौषशुचयः पर्वाष्टमी द्वादशी रिक्ता षष्ठिकयाऽन्विता खलदिनान्युग्रर्क्षमिश्रेंद्र- भम्। सर्पार्द्राः प्रथमार्त्तवे न शुभदाः संध्या च रिक्ता ऽष्टमी तीक्ष्णाद्ध्यंत्यमघानलं कुदिवसं त्यक्त्वा तदीयाप्लवः॥ १७ ॥**

मासा इति । एते पदार्थाः नवोढायाः प्रथमार्तवे प्रथमरजोदर्शने शुभदा न भवंति, एते के भाद्रमधूर्जपौषशुचयो मासाः मधुः चैत्रः ऊर्जः कार्त्तिकः शुचिराषाढ एते पंच मासाः नेष्टाः । पर्वणी पौर्ण- मासीदर्शौ अष्टमी द्वादशी रिक्ता किंलक्षणा षष्ठिकयान्विता षष्ठी- सहितेत्यर्थः । खलदिनानि रविभौमशनिवारा नेष्टाः । उग्रर्क्षम्, पितृ- पूर्विकांतकं मिश्रे द्वीशानले इन्द्रभं ज्येष्ठा सर्पः आश्लेषा आर्द्रा च परं

संध्या एते पदार्थाः प्रथमार्तवे न शुभदा भवंति । एतेष्वेव यदि जायते तदा कौशिकोक्ता शांतिर्लिखिताऽस्ति सा कर्तव्या । तदनंतरं तया ऋतुस्नानं कर्तव्यम् । तत्र शुद्धिमाह—रिक्तातिथिः अष्टमी तीक्ष्णं ज्येष्ठार्द्रोरगमूलम् । अश्वि अश्विनी अंत्यं रेवती मेघा कृत्तिका कुदिवसं रविभौममंदवारं त्यक्त्वा तदीयस्तस्या अयम् आप्लवः स्नानम् ऋतुमत्या मलस्नानं शुभमिति ॥ १७ ॥

अथ गर्भाधानमुहूर्तः ।

**त्यक्त्वा मूलमघांत्यमादिमानिशं श्राद्धस्य षस्रं कुहूं पक्षार्द्धं च चतुर्दशीं प्रथमतो रात्रीश्चतस्रो मुदा । स्वीयां योषितमार्त्तवे समतमीष्विन्दौ शुभे शोभनैः खेटैः कंटककोणगैस्त्र्यरिभवे पापैर्नृपोगेष्वियात् ॥ १८ ॥**

त्यक्त्वेति । आर्त्तवे ऋतुकाले स्वीयां योषितं स्वकीयप्रियतमां मुदा हर्षेणेयात् गच्छेत्, क ? समतमीषु समरात्रिषु षष्ठ्यष्टमीदशमीद्वादशीचतुर्दशीषु किं कृत्वा प्रथमतः ऋतुकालात् चतस्रो रात्रीः त्यक्त्वा च मूलं मघां रेवतीं त्यक्त्वा श्राद्धस्य नैमित्तिकस्य पूर्वरात्रिं तथा तदहोरात्रं च त्यक्त्वा कुहूम् अमां च परं पक्षार्धमष्टमीं चतुर्दशीं च त्यक्त्वा । क सति इंदौ शुभे चंद्रबले सति । शोभनैश्चंद्रबुधगुरुशुक्रैः कंटकलग्नतुर्यसप्तमदशमस्थैः कोणगैः नवपंचमगैः सद्भिः त्र्यरिभवे तृतीयषष्ठैकादशस्थैः रविकुजमंदैः सद्भिः । पुनः क नृयोगेषु जातकोक्तनृयोगेषु । ‘ ओजर्क्षे पुरु-

षांशकेषु बलिभिर्लग्नार्कगुर्विन्दुभिः पुंजन्म प्रवदेत् समांशकयुतैर्युग्मेषु तैर्योषितः । गुर्वर्कौ विषमे नरं शशिसितौ वक्रश्च युग्मे स्त्रियः ' इत्यादिभिर्योगैः सामान्येव भौमगुरुरविवारे मृगपुनर्वसुपुष्यमूलहस्तश्रवणानामेकतमे नक्षत्रे विषमलग्ने गुरौ त्रिकोणोदयस्थे ऋतुमतीं गच्छेदिति तात्पर्यार्थः ॥ १८ ॥

## पुंसवनसीमन्तमुहूर्तः ।

**मूलेज्यादितिविष्णुसूर्यशशिभे सीमंतमंगाष्टके**
**मासे पुंसवनं त्रिपंचकमिते दक्षे तदीशे विधौ ।**
**सद्दृष्टे कुजजीवभानुदिवसे पुंभागलग्ने खलैः**
**षष्ठत्र्यायगतैः शुभैः सुततपःकेंद्रेष्वरिष्फाष्टगैः ॥ १९ ॥**

मूलेति । एषु योगेषु सीमंतकर्मसंस्कारः । एषु केषु अंगाष्टके षष्ठेऽष्टमे मासि कुलाचाराद्वा । मूलम् ईज्यं पुष्यम् आदित्यं पुनर्वसुः विष्णुः श्रवणः सूयः हस्तं शशी मृगशिरः एषु नक्षत्रेषु त्रिपंचकमिते मासे पुंसवनं रक्षाबंधनं कार्यम् । क सति तदीशे दक्षे सति तस्य मासस्य तृतीयपंचमषष्ठाष्टममासानाम् ईशे स्वामिनि दक्षे बलवत्तरे सति । मासेशास्तु जातके प्रोक्ताः—' कललघनांकुरास्थिचर्मांगजं चेतनायाः सितकुजजीवसूर्यचंद्रार्किबुधाः । परत उदयपचंद्रसूर्यनाथाः क्रमशो गदिताः शुभाशुभ च मासाधिपतेः सदृशम् ॥ ' एतेषामेकतमे बलिनि विधौ चंद्रे सद्दृष्टे शुभदृष्टे कुजजीवभानूनामेकतमवारे पुंभागलग्ने विषमलवे लग्नके वा विषमलग्ने खलैः पापैः षष्ठतृतीयलाभगैः शुभैः शोभनैः सुत ५ तपः ९ केंद्रेषु १।४,

७ । १० गतैः अरिष्फाष्टगैः शुभैः रिष्फं द्वादशम् अष्टमं मृत्युभं तत्र गच्छन्ति ते रिष्फाष्टगाः न रिष्फाष्टगैः पुंसवनसीमंते स्तः ॥ १९ ॥

गण्डान्तं सूतिकास्नाननामकरणमुहूर्तश्च ।

**अश्विन्यन्त्यभयोर्मघोरगभयोर्मूलेन्द्रयोः प्राक् परं**
**नाडीद्वंद्वमसद्गमोद्वहजनुःकालेषु गंडांतकम् ।**
**मैत्रांत्यानिलभध्रुवेंदुषु रवीज्यारेषु सूताप्लवः**
**केंद्रे ज्ञेज्यसिते मृदुध्रुवचरे क्षिप्रेषु नामेष्टदम् ॥२०॥**

अश्विनीति । गमोद्वहजनुःकालेषु गंडांतकम् असत् । तत् कियत्क भवति, तदाह—अश्विन्यन्त्यभयोः अश्विनीरेवत्योः प्राक्परं घटीद्वंद्वम् अश्विन्यां प्राक् घटीद्वंद्वं रेवत्यामंत्यं घटीद्वयम् एवं चतुर्घटिकात्मकं गंडांत कालो भवति। एवं मघायाः प्राक्घटीद्वयम् उरगभमाश्लेषा तस्याः प्रांत्यं घटीद्वयं गंडांतकं भवति । मूलस्याद्यं घटीद्वयं इंद्रस्य ज्येष्ठायाः प्रांत्यं घटीद्वयं गंडांतं भवति । एवं चतुर्घटिकात्मकं गंडांतं भवति । अन्यग्रंथे गंडांतं त्रिविधमुक्तम्—' गंडांतं त्रिविधं प्रोक्तं नक्षत्रतिथिराशिजम् । नवपंचचतुर्थ्यंते ह्येकार्द्धघटिकामितम् ॥ ' अथ सूतायाः प्लवः स्नानं तत्क मैत्रांत्यानिलभध्रुवेंदुषु मैत्रमनुराधा अंत्यं रेवती अनिलभं स्वातिः ध्रुवाणि रोहिण्युत्तराः इन्दुः मृगशिरः एतेषु भेषु रवीज्यारेषु रविगुरुमंगलवारेषु। ज्ञेज्यसिते बुधगुरुशुक्रे केंद्रे सति मृदुध्रुवचरक्षिप्रेषु भेषु मृगशिरश्चित्रांत्यमैत्ररोहिण्युत्तरास्वातिपुनर्वसुश्रवणधनिष्ठाशतभिषक्हस्तपुष्याश्विन्यभिजित्सु नामकर्म इष्टदं वांछितप्रदं भवति ॥ २० ॥

प्रेंखारोहणमुहूर्तः ।

**पौष्णेज्याश्विकरद्वयध्रुवचरेष्वारार्किहीने दिने**
**दंताष्टादशषोडशार्कदशमे प्रेंखाधिरोहः शुभः ।**
**तच्चक्रेऽथ चतुर्दिशं शरमितास्तारा नगा मध्यगाः**
**सूर्यर्क्षाच्छुभमृत्युकार्श्यरुदनं दिक्ष्विष्टदा मध्यगाः २१**

पौष्णेति । अस्मिन्योगे प्रेंखाधिरोहः शुभः पौष्णेज्याश्विकरद्वयध्रुवचरेषु भेषु भौमशनिवर्जिते वारे दंत ३२ अष्टादश १८ षोडश १६ अर्क १२ दशमे १० दिने तच्चक्रे तस्याः प्रेंखायाश्चक्रे सूर्यर्क्षात् प्रतिदिशं पंच पंच भानि नगाः ७ मध्ये देयानि शीर्षप्रदेशे पंच शुभाः ताराः भानि दक्षिणे पंच मृत्युदाः पश्चिमे पंच कार्श्यकृतः सौम्ये पंच रुदनं कुर्वंति एताः चतुर्दिक्षु फलाः मध्यगाः नगाः इष्टदाः ॥ २१ ॥

निष्क्रमण-चौलमुहूर्तः ।

**निष्क्रामस्त्रितुरीयमासि हरिभद्वंद्वेऽदितीज्येंदुभे**
**मैत्राश्व्यंत्यकरे चरोदयलवे भौमार्किरिक्तोज्झिते ।**
**चित्रा पौष्णमृगेंद्रभे लघुचरे रिक्तारसूर्यार्कजान्**
**षष्ठीपक्षतिपर्वजन्मभदिनं त्यक्त्वा शुभं मुंडनम् २२**

निष्क्राम इति । यः प्रेंखाधिरूढः तस्य बहिर्निष्क्रमणं भवति त्रितुरीयमासि तृतीये चतुर्थे मासि शिशोर्निष्क्रामः सूर्यावेक्षणं शुभम्। हरिभद्वंद्वे श्रवणद्वये अदितिः पुनर्वसुः इज्यं पुष्यं इंदुभे मृगशीर्षे मैत्रमनुराधा अश्वि अश्विभम् अंत्यं रेवती करे हस्ते एषु भेषु च चरोदयलवे चरलग्ने मेष-

कर्कतुलामकराणामेकतमे लग्ने वा तदंशे नवांशे किंलक्षणे भौमार्किरिक्तोज्झिते मंगलशनिवाररिक्तातिथिवर्जिते निष्क्रमणं कार्यमित्यर्थः । चित्रापौष्णमृगेंद्रभे लघुचरे मुंडनं चौलं शुभम् । रिक्ता तिथिः आरो भौमः सूर्यः प्रसिद्धः अर्कजो मंदस्तान् वारान् षष्ठीं पक्षतिं प्रतिपदं पर्व पौर्णमासीदर्शौ जन्मभदिनं जन्मनक्षत्रं जन्मदिनं च त्यक्त्वा चौलकर्म कार्यमिति । अथ क्षौरकर्म । ' त्वाष्ट्राश्विपौष्णमृगपुष्यकरेंद्रभं च चौलं चरेषु च बुधेंदुकवीज्यवारे । कुर्यात् क्षुरादिकशुभं प्रविहाय रिक्तां पक्षांतपर्वदिनमेव निशां च संध्याम् ॥ १ ॥ मैत्रोत्तराविधिभवह्निभपितृभेषु बाणा ५ ब्धि ४ नाग ८ रस ६ वह्नि ३ मितांश्च घस्रान् । क्षौरी नरो भवति चेच्चतुराननेन तुल्यो न जीवति भृशं शरद बलाढ्यः ॥ २ ॥ भानुर्मासं क्षपयति तथा सप्त मार्तंडसूनुर्भौमश्चाष्टौ वितरति शुभं बोधनः पंच मासान् । सप्तेंवन्दौ दश सुरगुरौ शुक्र एकादशेति प्राहुर्गर्गप्रभृतिमुनयः क्षौरकार्येषु नूनम् ॥ ३ ॥ ' त्वाष्ट्रं चित्रा अश्वि अश्विनी पौष्णं रेवती मृगः मृगशिरः पुष्यं करो हस्तः इंद्रः ज्येष्ठा चरेषु स्वातीपुनर्वसुश्रवणधनिष्ठाशतभिषजः तेषु चंद्रबुधगुरुशुक्रवारेषु क्षौर कार्यम् । किं कृत्वा मैत्रोऽनुराधा विधिभं रोहिणी वह्निभं कृत्तिका पितृभं मघा एते नेष्टाः तान् त्यक्त्वा पक्षांतं प्रतिपत् पर्व अमावास्यापौर्णमास्यौ च परं रिक्तां विहाय रविकुजमंदान् त्यक्त्वा क्षौरं कार्यम् २२

### अन्नप्राशनमुहूर्तः ।

**पौष्णत्वाष्ट्रलघुध्रुवादितिहरिद्वंद्वैंदवे ज्ञे गुरौ शुक्रे**
**दर्शमथाष्टमीं हरिदिनं त्यक्त्वा च नंदां जनैः ।**

**लग्नर्क्षाष्टममुज्झ्य केंद्रनवधीरन्ध्रांत्यसौम्येष्टषड्-**
**वर्जेन्दौ रसमासि नुः शरमिते स्त्रीणां सदन्नाशनम्॥**

पौष्णेति । एषु योगेषु अन्नाशनं बालानामन्नप्राशनं तत्तु पौष्णत्वाष्ट्र-लघुध्रुवादितिहरिद्वंद्वैन्दवे रेवती चित्रा लघुभानि हस्तपुष्याश्विन्यभिजित् ध्रुवाणि रोहिण्युत्तरा अदितिः पुनर्वसुः हरिद्वंद्वं श्रवणद्वयम् ऐंदवं मृगः एषां समाहारः तस्मिन् ज्ञे बुधवारे गुरौ जीवे शुक्रे त्रिषु वारेषु दर्शम् अमावास्या, अष्टमीं हरिदिनं द्वादशीं नंदां प्रतिपत्षष्ठ्येकादशीः त्यक्त्वा जनेः जन्मभदिनं जन्मकालस्य लग्नं ऋक्षं राशिस्ताभ्यामष्टमलग्नं उज्झ्य आसमन्तात् उज्झ्य केंद्रनवधीरंध्रांत्यसौम्ये सति प्रथमतुर्यसप्तमदशमनवमपंचमाष्टम-द्वादशभवनेषु सौम्यग्रहयोगे अष्टमषष्ठरहिते विधौ षष्टेऽष्टमे मासि नुः पुरुषस्य स्त्रीणां कन्यानां शरमिते पंचमे मासि प्रथमान्नप्राशनं सदिति॥ २३॥

कर्णवेध—भूषणधारणमुहूर्तः ।

**मैत्रेज्यर्क्षमृगेऽन्त्यभश्रुतिकरद्वंद्वे पृथक् सद्ग्रहै-**
**स्त्र्यायेऽङ्गे गुरुसंयुते खलखगैर्हीनेऽथ सौम्येऽयने।**
**ओजेऽब्दे मधुपौषजन्मभदिनं मासं च हित्वा श्रवो-**
**वेधः सन्नथ दस्रपूषवसुभे भूषा करात्पंचके ॥ २४ ॥**

मैत्रेति । अस्मिन्योगे श्रवोवेधः सन् कर्णवेधः शुभः । क मैत्रेज्यर्क्षे-मृगे अनुराधापुष्यमृगशीर्षे अंत्यभश्रुतिकरद्वंद्वे पृथगिति रेवत्योः द्वयं श्रुतिद्वयं करद्वयं सद्ग्रहैः त्र्याये तृतीयैकादशे सद्भिः अंगे लग्ने गुरुसंयुते खलखगैः पापग्रहैः हीने लग्ने सौम्येऽयने सौम्यायन ओजेऽब्दे

विषमवर्षे मधुश्चैत्रः पौषः जन्मभदिनं मासं च एतानि त्यक्त्वा कर्णवेधः शुभः । अथ कर्णवेधे भूषा धार्या तत्राह—दस्रमश्विनी पूषभं रेवती वसुभं धनिष्ठा तत्र कराद्धस्तात्पंचके हस्तचित्रास्वातीविशाखानुराधासु भूषा कर्णवेधभूषा वलयादि लोकप्रसिद्धं चूडा इत्यादि धार्यम् । तत्र चक्रं वर्तते ॥ २४ ॥

चूडा चक्रम् ।

**त्री ३ षु ५ त्र्य ३ क्षि २ नगा ७ क्षि २ चंद्र १ गुण ३ भू १ धिष्ण्यानि सूर्यर्क्षतः सूर्यासृग्भृगुराहुविच्छनिगुरुग्लौकेतुदैवानि च। सौम्यर्क्षाणि शुभानि पाणिवलये कर्णत्रयेऽश्व्यानिले पित्र्ये भाग्यमृगेशभे द्विदयिते सौम्येष्विने कामठम् ॥ २५॥**

त्रीष्विति । पाणिवलये शंखभूषणे सूर्यक्षतः सूर्यभात् त्रिपंचत्रिद्विसप्तद्व्येकत्र्येकधिष्ण्यानि सूर्यासृग्भृगुराहुविच्छनिगुरुग्लौकेतुदैवानि भवंति। प्रथमं सूर्यस्य त्रीणि असृजो भौमस्य पंच भृगोस्त्रीणि राहोरक्षिणी द्वे विदो बुधस्य नगाः सप्त शनेरक्षिणी द्वे गुरोरेकं ग्लावश्चंद्रस्य त्रीणि केतोः भूरेकं एतानि धिष्ण्यानि वर्तंते तन्मध्ये सौम्यर्क्षाणि चंद्रबुधजीवशुक्रभानि भवंति । च परं कर्णत्रये श्रवणत्रये अश्व्याख्ये अश्विन्यां अनिले स्वातौ पित्र्ये मघायां भाग्ये पूर्वाफाल्गुन्यां मृगे ईशभे आर्द्रायां द्विदयिते विशाखायां सौम्येषु सौम्यवारेषु बुधगुरुशुक्रेषु इने रविवारे कामठं कमठपृष्ठवलयानि धार्याणि ॥ २५ ॥

मौञ्जीकर्ममुहूर्तः ।

**हस्तादित्रितयेऽन्त्यहर्यदितिभे द्वंद्वं पृथक् चंद्रभे**
**शुक्रेज्येंदुबले खलेंद्वितततनुं षष्ठेंदुमंत्यारिगम् ।**
**शुक्रं रंध्रखगान्विहाय धवले पक्षे द्वितीयाद्वये**
**पञ्चम्यां दशमीत्रये शुभलवे मौंजी तपःपंचके ॥२६॥**

हस्तादीति । एषु योगेषु मौंजी ब्राह्मणानां मेखलाबंधः श्रेष्ठः क्व हस्तादित्रितये अंत्यहर्यदितिद्वंद्वे पृथक् पुनर्वसुपुष्ये रेवत्यश्विन्योः श्रवणधनिष्ठे तत्र चंद्रभे मृगशीर्षे शुक्रेज्येंदुबले गुरुशुक्रचंद्राणां गोचरबले तपःपंचके माघादिपंचमासेषु पुनः क्व धवले पक्षे शुक्लपक्षे द्वितीयाद्वये द्वितीयातृतीययोः पंचम्यां दशमीत्रये दशम्येकादशीद्वादशीषु शुभलवे सौम्यलवे किं कृत्वा षष्ठेंदुम् खलेंद्वितततनुं खलैः रविभौमशनिराहुभिरिंदुना च इतां प्राप्तां तनुं लग्नं विहाय अंत्यारिगं द्वादशारिपुभावे शुक्रं विहाय रंध्रखगान् अष्टमभावे सर्वखगान् विहाय मौंजी यज्ञोपवीतकर्म कार्यम् ॥ २६ ॥

विद्यारंभमुहूर्तः ।

**मूलेऽश्वे मृगपंचके त्रिषु शरात्कर्णे त्रिपूर्वासु**
**विच्छुक्रेज्यार्कदिने पुरादिनयुतानध्यायरिक्तो-**
**ज्झिते । अब्दे पंचमके शिशोरतिशुभो विद्यो-**
**द्यमोऽथैंदवे हौताशे तिसृषूत्तरासु च धनुर्विद्या न**
**विद्या भवेत् ॥ २७ ॥**

मूल इति । एषु योगेषु शिशोर्बालस्य विद्योद्यमो विद्यारंभः शुभ एषु केषु मूलेऽश्वे अश्विन्यां मृगपंचके मृगार्द्रापुनर्वसुपुष्याश्लेषासु करा-

हस्तात्रये हस्तचित्रास्वातिषु कर्णे श्रवणे त्रिपूर्वासु तिसृषु पूर्वासु च एषु भेषु विच्छुक्रेज्यार्कदिनेषु बुधशुक्रगुरुरविवारेषु पंचमकेऽब्दे किलक्षणे पुरादिनयुताः पूर्वतिथियुता ये अनध्याया रिक्ताश्च तद्रहिते अष्टमीनवमी-त्रयोदशीचतुर्दश्यमापूर्णिमाप्रतिपच्चतुर्थ्यो निषिद्धाः । 'त्रयोदशीचतुष्कं च सप्तम्यादिदिनत्रयम् । चतुर्थी च तथा त्याज्या अष्टावेते गलग्रहाः ॥ ' अथ ऐंद्रे मृगे हौताशे कृत्तिकायां तिसृषु उत्तरासु धनुर्विद्या न श्रेष्ठा भवेत् ॥ २७ ॥

वस्त्रधारणमुहूर्तः ।

पौष्णेऽश्वे करपंचके च वसुभे चैलं बुधादित्रये
पुंसां पुष्यपुनर्वसुस्थिरयुते स्याच्छोभनं सत्तिथौ ।
तच्चक्रे नवधा सुरासुरनराः कोणेषु मध्ये दशा-
पाशे स्युः शुभनेष्टशोभनफलं पंकांजनांकादिकम् २८

पौष्ण इति । एषु योगेषु चैलं वस्त्रधारणं शोभनम् । पौष्णे रेवत्याम् अश्वे अश्विन्यां करपंचके हस्तादिपंचके हस्तचित्रास्वातीविशाखानुराधाः च परं वसुभे धनिष्ठायां बुधादित्रये बुधगुरुभृगुवारे रिक्तावर्जिततिथौ पुंसां पुरुषाणां पुष्यपुनर्वसुस्थिरयुते रोहिण्युत्तरात्रये वस्त्रधारण सत् । तच्चक्रे तद्वस्त्रस्य चक्रे नवधा नवभिर्भागे कृते कोणेषु चतुष्कोणेषु मध्यत्रिकोष्ठेषु दशापाशे कोष्ठद्वये सुरासुरनराः वसति, चतुष्कोणे सुरा वसति, मध्य-कोष्ठत्रये असुरा वसंति, दशापाशे प्रांते शेषविभागे कोष्ठे नराः वसंति, तत्र पंकांजनाङ्कादिकं पंकस्य वांजनस्य प्रथमं धारणात् अंकादिकं चिह्ना-

दिकं भवति । आदिशब्देन दग्धे फाटिते शुभनेष्टशोभनफलं ज्ञेयं देवांशे शुभं रक्षोंशे नेष्टं मनुष्यांशे शोभनफलम् । अत्र स्त्रीणां वस्त्रसाहचर्यात् भूषणाद्यपि धारयेत् । तथा चोक्तम्–' करादिपंचकेऽश्विभे सपौष्णवासवे स्मृता । धृतिश्च शंखकांचनप्रवालरक्तवाससाम् ॥ ' सज्जनवल्लभे– ' नासत्यपौष्णवसुभे करपंचकेषु मार्तंडभौमगुरुदानवमंत्रिवारैः । मुक्तासुवर्णमणिविद्रुमशंखदन्तरक्तांबराणि विधृतानि भवंति सिद्धयै ॥ ' ॥२८॥

अथ अग्न्याधानमुहूर्तः ।

**उद्वाहे वसुभागधेयकरणेऽग्न्याधानमिंद्राग्निभे**
**शाक्राग्नेयगमृध्रुवांत्यगुरुभे लग्ने जलर्क्षोज्झिते ।**
**चंद्रे कोणचतुष्टयोपचयगैरर्कारजीवेंदुभिः शेषै-**
**श्चोपचयस्थितैरमृतिगैः खेटैः शुभाप्त्यै भवेत् ॥२९॥**

उद्वाह इति । उद्वाहे विवाहकाले वसुभागधेयकरणेऽपि वसु धनं तस्य विभागकरणकालेऽपि अग्न्याधान कर्तव्यम् । क इंद्राग्निभे विशाखायां शाक्रे ज्येष्ठा आग्नेय कृत्तिका मृगः ध्रुवाणि रोहिण्युत्तरात्रयम् अंत्यं रेवती गुरुभे पुष्ये लग्ने जलर्क्षोज्झिते मीनकर्कमकरेभ्योऽन्यलग्ने चंद्रे जलराशिरहिते । कोणं त्रिकोणं ५ । ९ चतुष्टयानि १ । ४ । ७।१० कंटककेंद्रचतुष्टयसंज्ञाः । सप्तमलग्नचतुर्थखभानां उपचयानि षष्ठलाभतृतीयभानि एतेषु अर्कारजीवेंदुभिः सद्भिः शेषैः शेषग्रहैः बुधशुक्रशनिभिः उपचयस्थितैः सर्वैः अमृतिगैः अष्टमभावरहितैः अग्न्याधान शुभाप्त्यै भवेत् २९

अथ राज्याभिषेकमुहूर्तः ।

**ज्येष्ठायां हरिभे मृदुध्रुवलघुष्वोजस्विभिः पाकपैः**
**क्ष्माजार्कोदयजन्मपैः स्थिरतनौ शीर्षोदये सद्युते ।**
**रिक्तां प्रोज्झ्य जनुग्रहादुपचये लग्ने त्रिषष्ठायगैः**
**पापैरंत्यषडष्टवर्जितशुभैर्भूपाभिषेकः शुभः ॥ ३० ॥**

ज्येष्ठायामिति । एषु योगेषु भूपाभिषेकः । क्व ज्येष्ठायां हरिभे श्रवणे मृदूनि मृगचित्रारेवतीमैत्राणि ध्रुवाणि रोहिण्युत्तरर्क्षाणि लघूनि हस्त-पुष्याश्विन्यभिजित् तेषु पाकपः तात्कालिकदशानाथः क्ष्माजो भौमः अर्को रविः उदयजन्मपैरिति जन्मलग्नेशो जन्मराशीशः एभिः सर्वैः ओजस्विभिः बलिष्टैः शुभस्थानस्थैर्वा स्वोच्चसुहृत्स्वत्रिकोणस्वनवांशस्थैः वा तेजस्विभिः उदितैः स्थिरतनौ स्थिरलग्ने वृषसिंहकुंभाना-मेकतमे वा शीर्षोदये लग्ने । 'युग्मस्त्रीसिंहकुंभाऽलितुला; शीर्षोदयाः स्मृताः।' एतेषामेकतमे लग्ने सद्युते शुभग्रहयुते अत्र सद्दिने इति पाठे सोमबुध-गुरुभृगुवारेषु परं रत्नमालायां शनिवारोऽप्युक्तोऽस्ति तेन भौमार्कवारौ निषिद्धौ अन्ये वाराः शुभाः । रिक्तां प्रोज्झ्य जनुग्रहाज्जन्मलग्नात् वा जन्मराशेरुपचये ३ । ६ । १० । ११ लग्ने त्रिषष्ठायगैः पापग्रहैः अंत्यषडष्टवर्जितशुभैः शुभग्रहैः द्वादशषष्ठाष्टमरहितैः भूपस्याभिषेकः शुभ इति तात्पर्यार्थः ॥ ३० ॥

अथ शस्त्रधारणमुहूर्तः ।

**द्व्यादित्ये ध्रुवभेऽन्त्यभे द्विदयिते त्वाष्ट्रद्वये वारुणे**
**मैत्राश्वे रविजीवभार्गवदिने चंद्रे शुभैर्वीक्षिते ।**

**कुंतासिच्छुरिकाधनुःशरतनुत्राणानि कंटारिका**
**भूपालैरिति हेतयो विधुबले धार्या जयाप्तीच्छुभिः३१**

द्व्यादित्ये इति । भूपालैः राजभिः इति एतावन्मात्राः हेतयः आयुधानि एषु योगेषु धार्याः । किंलक्षणैः भूपालैः जयाप्तीच्छुभिः जयकांक्षिभिः । द्व्यादित्ये पुनर्वसुद्वये ध्रुवेषु अंत्ये रेवत्यां द्विदयिते विशाखायां त्वाष्ट्रद्वये चित्राद्वये वारुणे शतभिषे मैत्राश्वे अनुराधाश्विन्यौ एषु भेषु रविजीवभार्गवदिने वारेषु चंद्रे शुभैर्वीक्षिते चंद्रे शुभे शुभग्रहैर्वा ईक्षिते विधुबले चंद्रबले सति । कुंतः भल्लः असिः खड्गः छुरिका धनुः धनुष्यं शरः बाणः तनुत्राणं कवचम् इति हेतयो धार्याः ॥ ३१ ॥

अथ यात्राप्रकरणम् ।

**हस्तेन्दुश्रवणाश्विपुष्यवसुभेष्वादित्यमैत्रांत्यभे**
**सद्यानं त्रिकुबाणपर्वतमितास्ताराश्च शाक्रद्वयम् ।**
**मंदेंदू श्रुतिषट्कमीज्यममरेज्यर्क्षं कभं पूर्वतः**
**शुक्रार्कौ ज्ञकुजार्यमद्वयमथाऽर्कारार्किरिक्ता-**
**स्त्यजेत ॥ ३२ ॥**

हस्तेति । एषु योगेषु यानं गमनं सत् । हस्तेंदुश्रवणाश्विपुष्यवसुभेषु आदित्यमैत्रांत्यभे आदित्यं पुनर्वसुः मैत्रमनुराधा अंत्यभे रेवत्यां त्रिकुबाणपर्वतमितास्तारास्त्यजेत् । च परं पूर्वतः प्राचीदिक्तः शाक्रद्वयं ज्येष्ठामूले । मन्देंदुवारौ शनिसोमौ प्राच्यां त्यजेत् । श्रुतिषट्कं श्रवणादिषट्कं गुरुवारं याम्ये त्यजेत् । अमरेज्यर्क्षं पुष्यं कभं रोहिणीं शुक्रार्कौ पश्चिमे

त्यजेत् । ज्ञो बुधः कुजो भौमः अर्यमद्वयम् उत्तराफाल्गुनीहस्तौ उदक् त्यजेद् । अथ अर्कार्किरिक्ताः रविभौमशनिरिक्तास्तिथीः त्यजेत् । तथा चोक्तम्—'तिथ्यश्चतुर्थीं नवमीं चतुर्दशीं विहाय विष्टिं करणं च गच्छतः । भवंति चामीकरवाजिवारणा रथाश्च मुख्या धनवामिवारणाः' अन्यच्च नक्षत्रेषु 'परित्यजेत्त्वाष्ट्रयमोरगाणामर्धं द्वितीयं गमने जयेप्सुः । पूर्वार्धमाग्नेयमघाद्विदैवं स्वाती मतेनोशनसः समस्तम् ॥' सौम्येवारे शुभा यात्रेति ॥ ३२ ॥

अथ शुभशकुनानि ।

**विप्रा गोफलपुष्पदुग्धमणयो वेश्या दधीभो हय-**
**श्छत्रादर्शमधुज्वलच्छिखिसुरामांसास्त्रकन्यामृगाः ।**
**बभ्रुश्चाषमयूरपूरितघटाः पुत्रान्विता स्त्री सुवाग्**
**वाद्यं चामरधौतवस्त्ररजका दृष्टा गमे स्युः शुभाः॥३३**

अथ शकुनान्याह—विप्रा इति । एते पदार्थाः गमे दृष्टाः शुभाः स्युः । एते के विप्राः एकाधिका द्विजाः गावः फलं पुष्पं दुग्धं मणिः स्फटिकादि-वज्रांतः वेश्या सामान्यवनिता दधि इभो गजः हयोऽश्वः छत्रमातपत्रम् आदर्शो दर्पणः मधु क्षौद्रं ज्वलच्छिखी ज्वलमानो वह्निः सुरा मद्यं मांसम् अपक्वामिषम् अस्त्रं खड्गभल्लखेटकादि कन्या मृगः एणः बभ्रुर्नकुलः चाषो नीलपक्षी मयूरः शिखंडी पूर्णघटाः पुत्रयुक्ता स्त्री सुवाक् शोभनाशीः-प्रयुक्ता वाणी वाद्यं चतुर्विधम् । 'ततं वीणादिकं प्रोक्तं सन्नद्धं मुरजा-दिकम् । घनं तालादिकं ज्ञेयं सुषिरं वंशपूर्वकम ॥' इति । एषां

मध्ये एकतमं वाद्यम् । चामरं वायुव्यजनं धौतानि वस्त्राणि यत्पार्श्वे एवंविधो रजकः एते पदार्थाः अन्यच्च सुवाक् वेदध्वनिरपि ग्राह्यः वाद्यध्वनिरपि तथा मृदंगादिघोषः श्रेष्ठः । दर्शनं नकुलचाषमयूराणामपि श्रेष्ठम् । छागो भरद्वाजः पक्षी दृष्टः शुभः ॥ ३३ ॥

अथापशकुनानि ।

**काष्ठं चर्म तृणाहितूललवणास्थ्यंगारतैलं गुडो वंध्याऽरिः कलिमुक्तकेशवसनोऽभ्यक्तौषधिः क्लीबविट् । तक्रं पंकवसार्द्रवस्त्रजटिलश्यामान्नमुंडक्षुतं प्रव्राड्दीनसुमत्तवांतविगलन्दुष्टोक्तयो नो शुभाः॥३४**

काष्ठमिति । एते पदार्थाः गमे गमने दृष्टाः नो शुभाः । एते के काष्ठम् इंधनादि चर्म उपानदादि तृणं घासादि अहिः सर्पः तूलं कार्पासादि लवणं पंचविधं लवणं काललवणं सैंधवं सौवर्चलं सामुद्रकं यद्यप्यौषधमध्ये एतेषामंतर्भावः तथापि जवक्षारसाजिक्षारावौषधमध्ये ग्राह्यौ अस्थिदंतादि अंगारः शांताग्निकाष्ठेऽङ्गारः तैलं सर्वमपि वंध्या वनिता अप्रसूता स्त्री अभ्यक्तो नरः तैलाभ्यक्तः औषधं चूर्णगुटिकादि क्लीबः षंढः विट् पुरीषं तक्रं पंकः कर्दमः वसा पशूनां चर्मान्त्रादि आर्द्रं वस्त्रं यस्य सः आर्द्रवस्त्रः जटिलो जटावान् श्यामान्नं माषमुद्गतिलादि मुंडः क्षपणकः क्षुतं क्वचित् छिक्का प्रव्राट् संन्यासी दीनः सुमत्तः क्षीवः वांतो वमन् विगलन् पतन् दुष्टोक्तयो मा याहि क्व यास्यसीति नो शुभाः॥३४॥

अथ गृहारम्भमुहूर्तः ।

**मासे फाल्गुनमार्गमाधवनभःपौषे ध्रुवेंद्वीज्यभे**
**हस्तस्वातिवसुद्वये शनिभृगुज्ञेज्ये गृहारंभणम् ।**
**द्वारं प्राक्तिमिमेषकौर्पिषु शुभं याम्ये नृयुग्मांगना-**
**नक्रे पश्चिममुक्षतौलिकलशे कर्काश्विसिंहे उदक् ॥ ३५**

मास इति । एतेषु योगेषु गृहारंभणं वास्तुप्रारंभणं कर्तव्यम् क्व फाल्गुनमार्गमाधवनभःपौषे फाल्गुनः प्रसिद्धः मार्गो मार्गशीर्षः माधवो वैशाखः नभः श्रावणः पौषः प्रसिद्धः एतेष्वेव मासेषु गृहारंभः । तदुक्तं वास्तुशास्त्रे—' चैत्रे शोककरं गृहादिरचनं स्यान्माधवेऽर्थप्रदं ज्येष्ठे मृत्युकरं शुचौ पशुहरं तद्वृद्धिदं श्रावणे । शून्यं भाद्रपदेऽश्विने कलिकरं भृत्यक्षयं कार्तिके धान्यं मार्गसहस्ययोर्दहनभीर्माघे श्रियः फाल्गुने॥'इति। ध्रुवेषु रोहिण्युत्तरासु इंदौ मृगे ईज्यभे पुष्ये हस्तस्वातिवसुद्वये धनिष्ठा-शतभिषे शनिभृगुज्ञेज्ये वारे मंदशुक्रबुधगुरुवारेषु गृहारंभणं कार्यं तिमिमेषकौर्पिषु राशिषु सत्सु मीनमेषवृश्चिकेषु एतेषां राशीनां प्राग्द्वारं गृहं सत्, नृयुग्मे मिथुने अङ्गना कन्या नक्रे मकरे एतेषां याम्यद्वारं गृहं सत्, उक्षतौलिकलशे वृषतुलाकुंभे पश्चिमद्वारं सत् , कर्के अश्विनि धनुषि सिंहे उदग्द्वारं गृहं सत् ॥ ३९ ॥

**सिंहात्रित्रिरिहालये हरादिशः कोणेषु सव्यं भ्रमे-**
**च्छेषस्याननपृष्ठपुच्छमपरं शून्यं च खातं शुभम् ।**

**मीनाद्देवगृहेऽपसव्यमृषभाद्देयां च चापाद्गुः**
**सव्यं पूर्वदिशः क्रमेण तमसि द्वारं न सत्सम्मुखे ॥२६**

सिंहादिति । इहालये गृहे सत् सिंहात् त्रिषु तिसृषु संक्रांतिषु हरदिशः ईशानकोणतः सव्यं सव्येन शेषस्य शेषनागस्याननं पृष्ठं पुच्छं भ्रमेत् अपरं शून्यं तच्छून्यदिशि खातं शुभं सिंहकन्यातुलासंक्रांतिषु शेषस्येशानकोणे मुखम् आग्नेय्यां पृष्ठं नैर्ऋतौ पुच्छं वायव्ये शून्यं तत्र खातं कर्तव्यम् । एवं वृश्चिकादिषु तिसृषु संक्रांतिषु वह्निकोणे मुखं नैर्ऋतिकोणे पृष्ठं वायव्ये पुच्छम् ईशाने खातः । एवं कुंभादितिसृषु नैर्ऋतौ मुखं वायव्ये पृष्ठम् ईशाने पुच्छम् आग्नेय्यां खातः । एवं देवगृहे मीनाश्रयं त्रयं गणनीयं जलाशये मकरादेवमेव गणनीयम् । तथा च मुहूर्तचिंतामणौ- ' देवालये गेहविधौ जलाशये शेषाननं शंभुदिशः क्रमेण । मीनार्कसिंहार्कमृगार्कतस्त्रिभे खाते मुखात्पृष्ठविदिक्षु भावयेत् ॥ ' दैवज्ञवल्लभेऽपि— ' ऐंद्र्यां शिरो भाद्रपदाश्रये च याम्ये तु मार्गाश्रितयेऽहिवक्रम् । तपस्यमासाश्रिषु पश्चिमायां ज्येष्ठादिमासाश्रितयेऽप्युदक्स्यात् ॥ ' इति यत्कन्यादिगणना कृता तद्वास्तुशास्त्रोक्ता । ' प्राच्यां नागमुखं बुधैर्निगदितं भाद्राश्विने कार्तिके मार्गात्फाल्गुनशुक्रतस्त्रिषु मुखं याम्ये जले चोत्तरे । क्षेत्रेऽष्टाष्टविभाजिते दिनकराद्वाराल्लिखेत्कोष्ठकाः शन्यंगारकयोश्च तत्र फणिनः शारीरतो नो खनेत् ॥ ' इति राजवल्लभोक्तम् । ' पूर्वास्ये निखखातकं यमदिशास्ये खातमीशानके आग्नेय्यां खननं च पश्चिमदिशावक्त्रे तथैवोत्तरे । वक्त्रे नैर्ऋतिकोणके च खननं वा शंकु-

संस्थापनम्' इत्युक्तिवशात् परं च भाद्रपदः श्रावणपूर्णिमातस्तदा तु सिंहसंक्रांतिसंभवात् रामदैवज्ञादिभिर्मुहूर्तचिंतामणौ सिंहादितो गणना कृता अथ ऋषभात् वृषभराशितोऽपसव्यं वामक्रमेण गणना। वेद्यां विवाह-वेद्यां मंडपवेद्यां वा श्रौताधानवेद्यां खननमुक्तम्। अन्यच्च—' वृषाद्वेद्यां गृहे सिंहात्त्रिकं मीनात्सुरालये। सृष्ट्या संचरते नागो वेदीरुद्रालयं विना॥'

| र | चं | मं | बु | गु | शु | श | र |
|---|---|---|---|---|---|---|---|
| चं | मं | बु | गु | शु | श | र | चं |
| मं | बु | गु | शु | श | र | चं | मं |
| बु | गु | शु | श | र | चं | मं | बु |
| गु | शु | श | र | चं | मं | बु | गु |
| शु | श | र | चं | मं | बु | गु | शु |
| श | र | चं | मं | बु | गु | शु | श |
| र | चं | मं | बु | गु | शु | श | र |

| ईशाने ५।६।७ | | अग्नी ८।९। १० |
|---|---|---|
| | गृह खात | |
| वायव्य २।३।४ | | नैर्ऋत ११। १२।१ |

| ईशाने २।३।४ | | अग्नी ११। १२।१ |
|---|---|---|
| | वेद्यां तत्खात | |
| वायव्य. ५।६।७ | | नैर्ऋत ८।९ १० |

| ईशाने १२।१ २ | | अग्नी ३।४।५ |
|---|---|---|
| | देवा लय | |
| वायव्य ९।१० ११ | | नैर्ऋत ६।७।८ |

| ईशाने १०।११ १२ | | अग्नी १।२।३ |
|---|---|---|
| | जला शय | |
| वायव्य ७।८।९ | | नैर्ऋत्य ४।५।६ |

| | पूर्व ९।१० ११ | |
|---|---|---|
| उत्तर ६।७।८ | राहु दिशा | दक्षिण १२।१ २ |
| | पश्चिम ३।४।५ | |

अत्र खाते बहवो भ्रमंति वलनं च कुर्वंति। राजवल्लभोक्तं चतुःषष्टिकोष्ठगतं

भौमशनिगतफणिनः शरीरे नो खनेत् अत्र सिंहादित्रये पूर्वमुखे नागे वायव्ये शून्यमायाति उत्तराभिमुखे नैर्ऋतिकोणे शून्यमायाति इत्यङ्ग चापधन्वकर्तित्रयेऽप्यगुः राहुः पूर्वदिशः सकाशात् क्रमेण भ्रमति तमसि राहौ सम्मुखं द्वारं न सत् ॥ ३६ ॥

**याम्योदक्प्रथमालितौलिवृषभे द्वारं सतीने शुभं प्राक्पश्चाद्घटसिंहकर्किमकरेऽथो वास्तुकुंभेऽर्कभात्। षष्ठादष्टसु भेषु सद्गृहमथो द्वाविंशतेः षट् शुभाः सत्खेटे दशमस्थिते स्थिरगृहं द्व्यंगोदये सद्युते ॥ ३७॥**

याम्योदगिति । प्रथमालितौलिवृषभे प्रथमो मेषः अलिर्वृश्चिकः तौलिः तुला वृषश्च एषां समाहारः तत्र राशिषु इने सूर्ये गते सति याम्योदक् द्वारं शुभम्।घटसिंहकर्किमकरे इने गते सति प्राक् पश्चाद्द्वारं गृहं शुभम् ।एतेन वत्सः कथितः । वत्सः पूर्वादिषु दिक्षु कन्यादितत्त्रये त्रये वत्सो वसति गृहेषु सम्मुखपृष्ठतो न सत् । उक्तं च–' अग्रतो हरते आयुः पृष्ठतो हरते धनम् । वामदक्षिणयोर्वत्से गृहद्वारं सुशोभनम्॥'अथो वास्तुकुंभे वास्तुकलशे अर्कभात् षष्ठात् धिष्ण्यात् अष्टसु भेषु गृहप्रवेशः। अथो अथवा द्वाविंशतेः नक्षत्रात्षट्सु प्रवेशः शुभः । सत्खेटे शुभग्रहे दशमस्थिते स्थिरराशिलग्ने द्व्यंगोदये द्विस्वभावलग्ने सद्युते शुभग्रहयुते लग्ने सति गृहारंभः कार्यः । इति गृहारंभः ॥ ३७ ॥

अथ गृहप्रवेशमुहूर्तः ।

**द्वाश्चक्रं रविभाद्युग४द्वि२जलधि४द्वय२ब्धि४ द्वि २ वेद४द्वयं २ शेषं शीर्षभुजोर्ध्वकोणगणनान्मध्योर्ध्व-**

**पार्श्वद्वयम् । सत्कोणाधरगेन चाथ चरभांशार्कार-रिक्ताः कुहूं वामेऽर्केऽथ मृदुध्रुवेज्यहरिभे द्वंद्वे च वासोऽनिले ॥ ३८ ॥**

द्वाश्चक्रमिति । रविभाद्वाश्चक्रं शीर्षभुजोर्ध्वमस्तकस्वशाखोर्ध्वकोण-शाखाकोणगणनात् युगद्विजलधिद्व्यब्धिद्विवेदद्वयं शेषं लिखेत् । तत्र मध्यो-र्ध्वपार्श्वद्वये सत् । कोणेषु अधरगतकोणेषु चेद्रं द्वारस्थापनसमये समायाति तदोर्ध्वं संभवेत् । अथो देहल्यां धनहानिः स्यात् । अथ चरभांशार्कारिरिक्ताः कुहूममावास्यां त्यक्त्वा वामेऽर्के सति अत्र गृहे वासः कर्तव्यः । क मृदु-ध्रुवेज्यहरिभद्वंद्वेऽनिले मृदूनि चित्रारेवत्यनुराधाः ध्रुवाणि रोहिण्युत्तरत्रयाणि ईज्यं पुष्यं हरिभद्वंद्वं श्रवणधनिष्ठे अनिले स्वातौ । वामार्कस्तु बहुधाप्रोक्तः । एकप्रकारस्तु कार्शानवात्ससप्तसप्तनक्षत्राणि चतुर्दिक्षु लिखेत् । तत्र धिष्ण्ये रविर्भवेत् । द्वितीयप्रकारस्तु—'दग्धा दिगुक्ता रविणा प्रभुक्ता यस्यां रविर्यास्यति धूमिता सा । दीप्तार्कयुक्ता रजनीभवांत्ययामार्धतो याममिता गतिः स्यात् ॥' तृतीयप्रकारस्तु—लग्नकुंडलिकायां लग्नद्वितीयद्वादशेषु यो ग्रहः स पूर्वगः एकादशदशमनवमेषु दक्षिणगः अष्टमसप्तमषष्ठेषु पश्चिमगः पंचमचतुर्थतृतीयेषूत्तरगः एवं क्रमेण रविमानयंति ॥ ३८ ॥

अथ हलारम्भः ।

**द्वीशे मूललघुध्रुवे मृदुचरे पैत्र्ये हलारंभणं त्यक्त्वा मंदकुजौ हरिद्युसहितां रिक्तां च पर्वा-ष्टमीम् । तच्चक्रे रविभुक्तभाद्गणनया त्री २ पु ५**

**त्रि ३ बाण ५ त्रयं ३ त्री ३ ष्वृ ५ क्षेष्वशुभं शुभं फलमिहाशाशूलपूर्वं त्यजेत् ॥ ३९ ॥**

द्वीश इति । द्वीशे मूललघुध्रुवे मृदुचरे पैत्र्ये हलारंभणं के ते द्वीशे विशाखायां मूलं प्रसिद्धं हस्तपुष्याश्व्यभिजित् ध्रुवाणि रोहिण्युत्तरात्रयाणि मृदूनि चित्रारेवत्यनुराधाः चरभानि स्वातिपुनर्वसुश्रवणधनिष्ठाः पैत्र्यं मघा एतेषु ऋक्षेषु हलारंभणं हलप्रवहणं कार्यम् । मंदकुजौ वारौ द्वादशीसहितां रिक्तां पर्वणी पूर्णिमामावास्ये अष्टमीं च त्यक्त्वा । अथ तच्चक्रे हलचक्रे रवेः सूर्यस्य भुक्तभात् गणना कार्या, त्रि त्रीणि इषवः पंच त्रि त्रीणि बाणाः पंच त्रयं त्रिणि त्रि त्रीणि इषु पंच ऋक्षेषु नक्षत्रेषु फलं शुभमशुभं ज्ञेयम् । इह गमने आशाशूलपूर्वं दिक्शूलं वारशूलं त्यजेत् ॥ ३९ ॥

अथ बीजोप्तिमुहूर्तः ।

**मैत्रांत्ये वसुभे करत्रयमघामूलाश्विचांद्रे ध्रुवे पुष्ये सत्खलु बीजवापनमहेश्चक्रे रवेर्भुक्तभात् । त्रिस्त्रिर्मूर्ध्नि गले न शोभनफले तुंदेऽर्कताराः शुभाः पुच्छेऽन्यत्र चतुष्कपंचक इमे बीजोप्तिकाले खले ॥ ४० ॥**

मैत्रेति । एषु योगेषु बीजवापनं सत् । केषु मैत्रे अनुराधायां अंत्ये रेवत्यां वसुभे धनिष्ठायां करत्रये हस्तचित्रास्वातौ मघायां मूले अश्विन्यां चांद्रे मृगे ध्रुवे रोहिण्युत्तरासु पुष्ये अहेश्चक्रे सर्पाकारचक्रे रवेर्भुक्तभात् त्रिस्त्रिर्मूर्ध्नि त्रीणि गले शोभनफले न, तुंदे जठरे अर्कतारा द्वादश धिष्ण्यानि शुभाः पुच्छेऽन्यत्र चतुष्कपंचके पुच्छे चतुष्कं अन्यत्र बहिः पंचकं इमे बीजोप्तिकाले खले दुष्टफले भवतः ॥ ४० ॥

औषधदान—रोगिस्नानमुहूर्तः ।

**पौष्णेऽश्वेऽदितिभद्वये च शशिभे हस्तात्त्र कर्णा-त्रये मैत्रे कोणपभे सदौषधमथ त्यक्त्वा च रिक्तार्क-जान् । तत्स्नानं चरभांगयोरिनकुजे रिक्तासु कृष्णे दले शुक्रेंदुध्रुवसार्पपौष्णपितृभादित्यानि-लर्क्षं त्यजेत् ॥ ४१ ॥**

पौष्ण इति । एषु योगेषु औषधं सत् । एषु केषु पौष्णे रेवत्यां अश्वे अश्विन्याम् अदितिभद्वये पुनर्वसुपुष्ये शशिभे मृगे हस्तात्त्रये हस्तचित्रा-स्वातौ कर्णात्रये श्रवणधनिष्ठाशतभिषक्षु मैत्रे अनुराधायां कोणपभे मूले । किं कृत्वा रिक्तार्कजान् त्यक्त्वा औषधं सद्भवति इति शेषः । तस्य रोगिणः स्नानं चरभांगयोः चरभेषु स्वात्यादित्यहरित्रये चरलग्ने मेष-कर्कतुलामकरेषु इनकुजे सूर्यभौमवारे रिक्तासु तिथिषु कृष्णे दले कृष्णपक्षे अत्रापि शुभचंद्रे । रत्नमालायां यदुक्तम्—' रिक्तातिथौ चंद्रबले विहीने ' इत्यत्र चन्द्रबले स्वकीये नैसर्गिकबले क्षीणचंद्र इत्यर्थः । तत्र शुक्रवारं चंद्रवारं ध्रुवभानि सार्पमाश्लेषां पौष्णं रेवतीं पितृभं मघाम् आदित्यं पुनर्वसुम् अनिलर्क्षं स्वातीं त्यजेत् ॥ ४१ ॥

संक्रान्तिः ।

**घोरा क्रूररवौ लघूडुशशिनि ध्वांक्षी महोदर्यथो क्षोणीजे चरभे मृदुज्ञदिवसे मंदाकिनीज्ये ध्रुवे ।**

**मंदा मिश्रासिते च मिश्रकथनात्तीक्ष्णार्कजे राक्षसी श्रेष्ठा शूद्रकवैश्यचौरनृपविट्पश्वंत्यजानां क्रमात् ४२**

घोरेति । क्रूरेषु रविवारे या संक्रांतिः सा घोरा भवति, लघूडुषु शशिनि ध्वांक्षी भवति, क्षोणिजे भौमवारे चरभेषु या संक्रांतिः सा महोदरी भवति, मृदुभेषु ज्ञदिवसे या संक्रांतिः सा मंदाकिनी भवति, इज्ये गुरुवारे ध्रुवभेषु या संक्रांतिः सा मंदा भवति, मिश्रभे सिते या संक्रांतिः सा मिश्रा भवति, तीक्ष्णभेषु शनिवारे या संक्रांतिः सा राक्षसीनाम्नी भवति । एवमत्र युगपद्वारभयोगे संपूर्णनामद्वयोः अन्यथा त्वेकवारवशाद्भिन्ननाम तदा नामद्वयं भवति। क्रमेण सप्तापि संक्रांतयः शूद्रवैश्यचौरक्षत्रियद्विजपशुम्लेच्छानां सा शुभा भवति । घोरा शूद्रान् सुखयति, ध्वांक्षी वैश्यान् सुखयति, महोदरी चौरान् सुखयति, मन्दाकिनी नृपान् सुखयति, मन्दा द्विजान् सुखयति, मित्रा पशून्सुखयति, राक्षस्यंत्यजान् सुखयति ॥ ४२ ॥

संक्रान्तिपुण्यकालः ।

**द्व्यंगर्क्षे षडशीतिवक्त्रमयनं सौम्यं मृगे चोत्तरा नाड्यः षोडश पुण्यदाश्च विषुवन्मेषे तथा तौलिनि । मध्याः पुण्यतमाः स्थिरे हरिपदं याम्यायनं कर्कटे पूर्वाः पुण्यतमाश्च तत्र तिलयुग्धान्यं घृतं चार्पयेत् ॥ ४३ ॥**

द्व्यंगर्क्षे इति । द्व्यंगर्क्षे द्विस्वभावराशौ या संक्रांतिः तस्याः षड-शीतिवक्त्रं द्विस्वभावराशयो मिथुनकन्याधनुर्मीनाः एताः षडशीति-मुखाभिधाः । मृगे मकरे या संक्रांतिः तत्सौम्यायनं भवति । अत्र पंचसंक्रांतिषु उत्तराः संक्रांतिकालात्पराः षोडश नाड्यो घटिकाः पुण्यदाः । इदं साधारणेन कथितम्—'पूर्वतोऽपि परतोऽपि संक्रमात्पुण्य-कालघटिकास्तु षोडश । ' इति वचनात् । अन्यथा अनयोर्विशेष उक्तः ब्रह्मवैवर्तादौ—' अतीतानागते पुण्ये द्वे उदग्दक्षिणायने । त्रिंशत्कर्कटके नाड्यो मकरे तु दशाधिकाः ॥ ' इति मकरे चत्वारिंशत् घटिका उक्ताः । मेषे तथा तौलिनि तुलायां संक्रांतिषु विषुवत्यां तत्र मध्याः पुण्यतमाः विशेषवचनात् दश प्रोक्ता वर्तन्ते । ' वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश ' इति वचनात् । स्थिरे स्थिरराशौ वृषसिंहवृश्चिक-कुंभसंक्रांतिषु हरिपदं भवति । कर्कटे याम्यायनं भवति । तत्र पूर्वाः संक्रांतितः प्राक् त्रिंशन्नाड्यः पुण्यदाः । तत्र संक्रमकाले तिलान् धान्य घृतं अर्पयेत् । तथा चोक्तम्—' संक्रांतौ यानि दानानि हव्यकव्यानि भारत । तानि तान्युपतिष्ठंति पितॄणामक्षयाय च ॥' इति व्यासः ॥ ४३॥

करिवाजिगोकर्म ।

**द्व्यादित्येऽश्वकरत्रये च करिणां कर्माथ पौष्णद्वये**
**स्वातीज्यादितिभे करे मृगवसुद्वंद्वे तथा वाजिनाम् ।**
**शाक्रेऽर्के वसुभद्वयेऽदितियुगे द्वीशाश्विपौष्णे गवां**
**नो कर्णध्रुवपर्वपक्षकदले त्वाष्ट्रे च रिक्तार्कयोः॥४४॥**

द्वयादित्येति । एषु योगेषु करिणां हस्तिनां कर्म आरोहणानयन- शिक्षादिकर्म कर्तव्यम्।केषु ? आदित्याद्विः द्व्यादित्यं पुनर्वसुपुष्ये तत्र अश्वि- करत्रये अश्विन्यां हस्तात्त्रये हस्तचित्रास्वातौ करिणां हस्तिनां कर्म कुर्यात्। अथ पौष्णद्वये रेवत्यश्विन्योः स्वातौ ईज्ये पुष्ये अदितिभे पुनर्वसौ करे हस्ते मृगे मृगशीर्षे वसुद्वंद्वे धनिष्ठाशतर्क्षयोः वाजिनां कर्म कुर्यात् आनय- नारोहणादिशिक्षाकर्म कुर्यात् । शाक्रे ज्येष्ठायां अर्के हस्ते वसुभद्वये धनिष्ठाशतभिषजोः अदितियुगे पुनर्वसुपुष्ये द्वीशे विशाखायाम् अश्विन्यां पौष्णे रेवत्यां गवां गोवृषाणाम् आनयनादिक्रयविक्रयदमनादिकर्म कुर्यात् । कर्णे श्रवणे ध्रुवेषु रोहिण्युत्तरासु पर्वणोः दर्शपौर्णमास्योः पक्षक- दले अष्टम्यां त्वाष्ट्रे चित्रायां रिक्तातिथौ अर्कवारे पशूनां पूर्वोक्तकरि- तुरंगगवां किमपि कार्यं न कार्यम् । तथा चोक्तम्–' चित्रोत्तरावैष्णव- रोहिणीषु चतुर्दशीदर्शदिनाष्टमीषु । स्थानप्रवेशं गमनं विदध्याद्धीमान् पशूनां न कदाचिदेव ॥ ४४ ॥

**चक्रेऽश्वे शिरसि त्रयं सुखकरं वक्त्रे त्रयं मानदं**
**वृद्ध्यै पंच हृदिस्थभानि चरणेष्वष्टौ तु दुष्टानि च।**
**पुच्छे स्वक्षयकृच्चतुष्टयमथो पृष्ठे चतुष्कं मृतौ**
**सूर्यर्क्षादिनभावधेः फलमिदं वाहर्क्षतः केचन ॥ ४५ ॥**

चक्रे इति । अश्वे चक्रे अश्वाकारचक्रे सूर्यर्क्षाद्भत्रयं शिरसि देयम् अत्र मुहूर्ते सुखकरं ततस्त्रयं वक्त्रे मुखे मानदं भवति ततः हृदि पंच भानि वृद्ध्यै वाहनवृद्ध्यै भवंति चतुश्चरणेषु ततोऽष्टौ भानि दुष्टानि

भवंति पुच्छे चतुष्टयं स्वक्षयकृद्धननाशकृद्भवति पृष्ठे चतुष्कं मृतिनिमित्तं भवति इति सूर्यभाद्दिनभावधेः फलं केचन वदंति केचन वाहर्क्षतः अश्वस्य नामनक्षत्राद्दिनभावधेः फलं वदंति तत्तु नरपतिजयचर्यायां युद्धसमये शनिस्थितिविलोकनार्थे तुरंगभाल्लिखंति अत्र तु सूर्यभादेव गणना कार्या ॥ ४५ ॥

उष्ट्रमहिषी–मन्थान–तोयार्चाः ।

**सौम्ये पौष्णयुगे करेऽदितियुगे द्वीशे धनिष्ठाद्वये**
**पूर्वास्विंद्रयुगे सदुष्ट्रमहिषीकर्माथ मंथानकम् ।**
**मूले पौष्णकरत्रये ध्रुवमृगे मैत्रेऽश्विभे वासवे**
**तोयार्चा शशिजीवभार्गवदिने मूले करे वैष्णवे ॥४६॥**

सौम्य इति । एषु योगेषु उष्ट्रकर्म सत् । एषु केषु ? सौम्ये मृगे पौष्णयुगे रेवत्यश्विन्योः करे हस्ते अदितियुगे पुनर्वसुद्वये द्वीशे विशाखायां धनिष्ठाद्वये धनिष्ठाशतभिषजोः पूर्वासु तिसृषु इंद्रयुगे ज्येष्ठामूलयोः उष्ट्रस्य दतिबंधनक्रयविक्रयादि कार्यं महिषी आनेया दोह्या । अथ मंथानकं दधिमंथनमुहूर्तः—मूले पौष्णे रेवत्यां करत्रये हस्तचित्रास्वातौ ध्रुवाणि रोहिण्युत्तरात्रयाणि मृगे मैत्रे अनुराधायाम् अश्विभे वासवे धनिष्ठायां दधिमंथनस्य नवीनारंभः कार्यः । अथ तोयार्चा—प्रसूताभिः स्त्रीभिः जलमातॄणां पूजा कार्या सा तोयार्चा चंद्रगुरुभार्गववारेषु मूलभे हस्ते वैष्णवे श्रवणे अन्यत्र कुलाचारादपि पूजा ॥ ४६ ॥

कूपखननमुहूर्तः ।

**मासे फाल्गुनपौषमाधवनभोमार्गेऽष्टमीं द्वादशीं रिक्तां प्रोज्झ्य शशिज्ञजीवदिवसे हस्तेऽथ मैत्रे ध्रुवे । पुष्ये मैत्रवसुद्वये शनिबुधेज्यर्क्षे तनौ कर्किणि श्रेष्ठः कूपविधिश्च सौम्यखचरैः केंद्रत्रिकोणस्थितैः ॥ ४७ ॥**

मास इति । एषु योगेषु कूपविधिः श्रेष्ठः । एषु केषु ? फाल्गुनपौषमाधवनभोमार्गे मासे । माधवो वैशाखः नभः श्रावणः मार्गः मार्गशीर्षः । तत्र अष्टमीं द्वादशीं रिक्तां प्रोज्झ्य त्यक्त्वा । शशी चंद्रः ज्ञो बुधः जीवो गुरुः एषां दिवसे वारे हस्तभे पैत्र्ये मघायां ध्रुवे रोहिण्युत्तरात्रयेषु पुष्ये मैत्रे अनुराधायां वसुद्वये धनिष्ठाशतभिषग्द्वये शनिबुधेज्यर्क्षे शनिबुधगुरूणाम् ऋक्षे राशौ तनौ लग्ने कर्किणि लग्ने सौम्यखचरैः सौम्यग्रहैः केंद्र १ । ४ । ७ । १० त्रिकोणे ५ । ९ स्थितैः कूपखननारंभः कार्यः ॥ ४७ ॥

कूपखननदिक्—द्रुमारोपमुहूर्तश्च ।

**ग्रामाद्वायुहुताशराक्षसदिशं त्यक्त्वाऽम्बुकूपं खनेत्तच्चक्रेऽर्कभतास्त्रिकं क्रमगतं मध्येंद्रदिक्तो लिखेत् । चंद्रर्क्षावधि मध्यसौम्यवरुणाग्नेयाः शुभाः पादपारोपे पुष्यमृदुध्रुवाश्विशतभं द्वीशं समूलं करः ॥ ४८ ॥**

ग्रामादिति । ग्रामात् वायुकोणाग्निकोणराक्षसकोणान् त्यक्त्वा राक्षसं नैर्ऋतिकोणम् अंबुकूपं जलभरणार्थं कूपं खनेत् । तच्चक्रे कूपचक्रे

अर्कभतः सूर्यभात् त्रिकं त्रिकं मध्येंद्रदिक्तोऽपि क्रमगतं लिखेत् । तत्र मुहूर्तनक्षत्रावधि गणना कार्या । मध्यसौम्यवरुणाग्नेयाः शुभाः । मुहूर्तनक्षत्रं मध्ये आयाति तच्छुभं वा सौम्यदिशि उदक् श्रेष्ठं वरुणा दिक् पश्चिमायां श्रेष्ठम् आग्नेयकोणेऽपि श्रेष्ठम् । अथ पादपारोपे वृक्षारोपणे पुष्यः श्रेष्ठः मृदूनि चित्रा रेवती अनुराधा मृगः श्रेष्ठानि ध्रुवभानि रोहिण्युत्तराणि अश्विनी शतभं शततारा द्वीशं विशाखा मूलेन सह करः हस्तः एषु वृक्षाः रोपणीयाः बीजवापो वृक्षस्य कार्यः ॥ ४८ ॥

देवप्रतिष्ठामुहूर्तः ।

**मैत्रे पौष्णलघुध्रुवादितिमृगे कर्णद्वये स्याद्धरे-**
**र्वाग्देव्या गणनायकस्य फणिनां कर्णद्वये पुष्यभे ।**
**रिक्ताविष्टिकुजान् विहाय नवधीकेंद्रायसंस्थैः**
**शुभैः पापैः षट्त्रिभवस्थितैर्ग्रहगणस्येज्ये ध्रुवे**
**स्थापनम् ॥ ४९ ॥**

मैत्र इति । एषु योगेषु हरेः स्थापनं स्यात् । क मैत्रेऽनुराधायां पौष्णे रेवत्यां लघुषु भेषु हस्त ईज्यः पुष्यः अश्विनी अभिजित्सु ध्रुवेषु रोहिण्युत्तरासु अदितिभे पुनर्वसौ मृगे मृगशीर्षे कर्णद्वये श्रवण-धनिष्ठयोः एषु हरेः प्रतिष्ठा । वाग्देव्याः सरस्वत्याः गणनायकस्य गणेशस्य फणिनां क्षेत्रपालादीनां कर्णद्वये श्रवणधनिष्ठायां पूषभे रेवत्यां ग्रहगणस्य रव्यादीनां शनिपर्यंतानां प्रतिमादिस्थापनम् । ईज्ये पुष्ये

ध्रुवे रोहिण्युत्तरात्रये चतुर्षु ध्रुवभेषु । तत्र प्रतिष्ठायां ग्रहयोगानाह—नव ९ धी ५ केंद्र १ । ४ । ७ । १० आय ११ संस्थैः शुभैः पापैः षट् ६ त्रि ३ भव ११ स्थितैः । किं कृत्वा प्रतिष्ठापनं कुर्यात् रिक्ता-विष्टिकुजान्विहाय रिक्ता ४ । ९ । १४ विष्टिर्भद्रा कुजं मंगलवारं विहाय प्रतिमानां प्रतिष्ठापनं कार्यम् ॥ ४९ ॥

नृत्यनृपेक्षासेवामद्यारम्भमुहूर्तः ।

**पौष्णे पुष्यवसुद्वये च रविभे मैत्रोत्तरास्विंद्रभे**
**सन्नृत्यं नृपतीक्षणं लघुमृदुश्रीशद्वये सध्रुवे ।**
**शस्तं सेवकरक्षणं स्थिरतनौ वारे शनेर्भे ध्रुवे**
**पूर्वार्द्राहिमघेंद्रमूलशतभे याम्ये शुभश्चासवः ॥५०॥**

पौष्णे इति । एषु भेषु नृत्यारंभणं सत् । क्व पौष्णे रेवत्यां पुष्ये वसुद्वये धनिष्टाशतभिषजोः रविभे हस्ते मैत्रेऽनुराधायाम् उत्तरासु तिसृष्वपि इंद्रभे ज्येष्ठायां नृत्यं नृत्यारंभः सत् । नर्टीनां वा नटानां नृत्यशालायां नृत्यारंभणे मुहूर्त्तावलोकनम् । लघुभानि हस्तपुष्याश्विन्यभिजितः मृदूनि मृगशीर्षचित्रारेवत्यनुराधाः श्रीशद्वये श्रवणधनिष्टायां सध्रुवे ध्रुवं रोहिण्युत्तरात्रयं ध्रुवभसहिते नृपतीक्षणं नृपावलोकनं सत् । स्थिरतनौ शनेर्वारे ध्रुवभेषु सेवकरक्षणं शस्तम् । पूर्वासु तिसृषु आर्द्रायां अहिः सर्पः मघायां इंद्रे ज्येष्ठायां मूले शतर्क्षे शततारकायां याम्ये भरण्याम् आसवः शुभः । आसवशब्देन द्राक्षासवो लवंगासवो मधुकासवोऽपि ग्राह्यः । राज्ञामुप-

योगित्वात् तत्संधाने मुहूर्त्तावलोकनम् । रत्नमालायामपि मद्यारंभधिष्ण्यान्यादावुक्तानि । तथा च—'रौद्रे पित्र्ये वारुणे पौरुहूते याम्ये सार्पे नैर्ऋते चैव धिष्ण्ये । पूर्वाख्यासु त्रिष्वपि श्रेष्ठ उक्तो मद्यारंभः कालविद्भिः पुराणैः' इति ॥ ५० ॥

वृषलीमुहूर्तः ।

**पौष्णाश्वानिलहस्तमैत्रवसुभेष्वारार्किजीवे भृगौ**
**पुंश्चल्याः पुनरुद्वहो विधुबले रिक्ताकुयोगोज्झिते ।**
**तच्चक्रे रविभात्त्रिकं क्रमगते मध्येंद्रदिक्तो लिखे-**
**दाग्नेयी न शुभाऽनिला च विषयं ज्ञात्युक्तधर्मं श्रयेत्५१**

पौष्णाश्वेति । एषु योगेषु पुंश्चल्याः पुरुषांतरवांछिन्याः पुनरुद्वहो विधवायाः परनरेण सम्बन्धोऽयम् । एषु केषु पौष्णे रेवत्याम् अश्विन्याम् अनिले स्वातौ हस्ते मैत्रेऽनुराधायां वसुभे धनिष्ठायाम् आरे भौमवारे अर्के रविवारे जीवे गुरुवारे भृगौ शुक्रवारे। तत्र विधुबले द्वयोश्चन्द्र शुभे सति रिक्ता कुयोगो व्यतीपातवैधृतिमृत्युकाणयमघंटाद्यैः उज्झिते रहिते । तच्चक्रे पङ्चक्रे अर्कभात् त्रिकं त्रिकं मध्येन्द्रदिक्तः क्रमेण लिखेत् । तत्र मुहूर्तनक्षत्रम् आग्नेय्यां शुभं न अनिले वायुकोणेऽपि शुभं न । अन्येषु दिग्विभागेषु मुहूर्तभं श्रेष्ठं ज्ञेयम् । विषयो देशः ज्ञातिः स्वकीयो वर्णः क्रमेण ज्ञातिस्तयोक्तो धर्मः तं श्रयेत् । तथा चोक्तम्—'न शास्त्रदृष्ट्या विदुषा कदाचिन्नो लंघनीयाः कुलदेशधर्माः । मूलं हि

तेषां च्युतवेदशाखा महानधर्मः स्थितिभंगदोषात् ॥ ' इति यत्कुले विधवायाः पुनरुद्वह उचितस्तत्रैव देशे धर्मे तैरेव पूर्वोक्तयोगैः कार्यः ५१ ॥

गोचरफलम् ।

**लाभे लाभकृतोऽखिलाः षडनुजे पंगुः कुजोऽर्कः सखे त्र्याद्यास्तारिखगः शशी व्ययगृहं त्यक्त्वा समे विद्भृगुः । षट्खास्तान्यमथास्तधर्मधनधी-ष्वीज्यः शुभो जन्मभादुद्वाहे कुरसत्रिदिक्षु महि-तश्चेन्नो परैर्वेधितः ॥ ५२ ॥**

लाभ इति । अखिला ग्रहाः नवापि ग्रहाः लाभे एकादशस्थाने लाभकृतो भवंति । पंगुः शनिः कुजः भौमः षडनुजे षष्ठे तृतीये शुभः । अर्कः सूर्यः सखे षडनुजे दशमसहिते षडनुजे सूर्यः ३ । ६ । १० श्रेष्ठः शशी त्र्याद्यास्तारिखगः चन्द्रः तृतीयः आद्यः प्रथमः अस्तः सप्तमः अरिः षष्ठः खगः दशमः श्रेष्ठः ३ । १ । ७ । ६ । १० विद् बुधः व्ययाख्यं द्वादशगेहं त्यक्त्वा समे २ । ४ । ६ । ८ । १० भृगुः षट्खास्तान्यं यथा तथा षष्ठदशमसप्तमगः शुक्रो नेष्टः । अन्येषु सर्वभावेषु श्रेष्ठः १ । २ । ३ । ४ । ५ । ८ । ९ । ११ । १२ ईज्यः गुरुः अस्तधर्मधनधीषु ७ । ९ । २ । ५ । श्रेष्ठः । जन्म-भात् इदं गोचरफलं जन्मराशेर्गणयित्वा ज्ञेयम् । उद्वाहे विवाहे ईज्यः गुरुः कुरसत्रिदिक्षु १ । ६ । ३ । १० महितः पूजितः सन् शुभो

भवति। पूजां कृत्वा लग्नं कार्यं, तदुक्तम्—'षष्ठे जन्मनि देवेज्ये तृतीये दशमेऽपि वा। भूरिपूजा प्रकर्तव्या कन्यायाः कथितं शुभम्॥' अयं गोचरग्रहस्तत्फलं यत्कथितं शुभं स तदा फलं ददाति यदा परैर्नो वेधितः। अत्र गोचरे ग्रहवेधोप्युक्तोऽस्ति तथा च रत्नमालायामुक्तम्—'लाभ ११ विक्रम ३ ख १० शत्रुषु ६ स्थितः शोभनो निगदितो दिवाकरः। खेचरे सुत ५ तपो ९ जलां ४ त्य १२ गैर्व्यार्किभिर्यदि न विद्धयते तदा॥' अत्र शनिर्न विद्धयति 'द्यून ७ जन्म १ रिपु ६ लाभ ११ ख १० त्रिग ३ श्चन्द्रमाः शुभफलप्रदस्तदा। स्वा २ त्मजा ५ त्य १२ मृति ८ बंधु ४ धर्म ९ गैर्विद्धयते न विबुधैर्यदि ग्रहैः॥ २॥' अत्र चन्द्रस्य बुधवेधो नास्ति। 'विक्रमा ३ य ११ रिपुगः ६ शुभः कुजः स्यात्तदांत्य १२ सुत ५ धर्मगैः ९ खगैः। चेन्न विद्ध इनसूनुरप्यसौ किंतु धर्मघृणिना न विद्धयते॥ ३॥' शनिस्तु सूर्येण न विद्धयते। 'स्वां २ बु ४ शत्रु ६ मृति ८ खा १० यगः ११ शुभो ज्ञस्तदा न खलु विद्धयते यदा। आत्मज ५ त्रि ३ तप ९ आद्य १ नैधन ८ प्रांत्य १२ गैर्विविधुभिर्नभश्चरैः॥ ४॥' बुधस्य चन्द्रवेधो न। 'स्वा २ य ११ धर्म ९ तनया ५ ङ्गना ७ स्थितो नाकनायकपुरोहितः शुभः। रिष्फ १२ रंध्र ८ ख १० जल ४ त्रि ३ गैर्यदा विद्धयते गगनगामिभिर्न हि॥ ५॥ आसुताष्टम ८ तपो ९ व्यया १२ य ११ गो विद्ध आस्फुजिदशोभनः स्मृतः। नैधना ८ स्त ७ तनु १ कर्म १० धर्म ९ धी ५ लाभ ११ वैरि ६

सहज ३ स्थखेचरैः ॥ ६ ॥' शुक्र एवंविधो विचार्यः यदा वेधकस्थाने ग्रहो भवति ग्रहस्थाने वेधको भवति तदा वामवेधो भवति तदा शुभफलं ग्रहाः प्रयच्छंति । तथा चोक्तम्—' एवमत्र खचरा व्यधान्विताः सत्फलं नहि दिशंति गोचरे । वामवेधविधिना त्वशोभना अप्यमी शुभफलं दिशंत्यलम् ॥ १ ॥' अत्र प्रायः सम्मुखो वेधो भवतीति प्रायेण सर्वत्रेति । उक्तं च—' स्वराशेर्यत्र खेटः स्यात्खेटाद्यत्र ग्रहो भवेत् । तत्र वेधोऽक्षमो ज्ञेयो यथोक्तफलदो ध्रुवम् '॥ ५२ ॥

नौकायानम् ।

**पूर्वासु श्रवणद्वये मृदुलघुष्वादित्य इष्टे तिथौ**
**शुक्रार्केज्यदिने खलैरुपचयेष्विष्टैरषष्ठाष्टगैः ।**
**नौयानं सदथोत्तरायममघार्केज्यश्रुतौ तद्भृति-**
**र्यापारो मृद्रुभे चरर्क्षलघुभेऽर्कारार्किरिक्तोज्झिते ५३**

पूर्वास्विति । एषु योगेषु नौयानं नौकाप्रयाणं श्रेष्ठम् । क्व पूर्वासु तिसृषु श्रवणद्वये मृदुषु लघुषु आदित्यः पुनर्वसुः इष्टे तिथौ रिक्तातिथिरहिततिथौ शुक्रार्केज्यदिने शुक्ररविगुरुदिनेषु तत्र लग्ने उपचयेषु त्र्यारिखायेषु खलैरशुभग्रहैः इष्टैः शुभग्रहैः अषष्ठाष्टगैः षष्ठाष्टमरहितैः सद्ग्रहैः सद्भिः नौका चालनीया । अथेत्यनन्तरम उत्तरायममघार्केज्यश्रुतौ तस्याः भृतिः नौकामध्ये वसुप्रक्षेपः कार्यः । तत्तटे गत्वा अर्कारार्किरिक्तोज्झिते समये रविभौमशनिवाररिक्तातिथिरहिते समये मृदुभे

चरर्क्षे लघुभे व्यापारः कार्यः। 'साधारणोग्रध्रुवदारुणाख्ये धिष्ण्ये यदत्र द्रविणं प्रयुक्तम् । न लभ्यते तन्नियतं कदाचित्' इति वचनात् मिश्रक्रूर-स्थिरतीक्ष्णेषु व्यवहारो निषिद्धः ॥ ९३ ॥

नौकाचक्रम् ।

**एकैकं कूपवस्त्रे तरुतलत उदक् षट् भानि दद्या-त्पठाणेऽप्येकैकं पृष्ठपार्श्वे नव कुमुडुमुखे मध्य एकं भृतौ षट् । भास्वद्धिष्ण्यात्पठाणानन-शिखरतले नो सदिष्टं सुकाणे मध्ये सिद्धिः पठाणे भयमिह गदितं पोतचक्रे फलज्ञैः ॥ ५४ ॥**

एकैकमिति । भास्वद्धिष्ण्यात् सूर्यभात् एकं एकं कूपवस्त्रे कूप-शब्देन नौकामध्यकाष्ठं वस्त्रं शटिः तत्र एकं एकं धिष्ण्यं लिखेत् । तरुतलतः कूपतलतः उदक् षट् षड् भानि दद्यात् पठाणे एकैक पठाणं नौकामंडनकाष्ठं तत्रैकं सुकाणे कर्णधारनिवेशस्थानेऽपि एकैकं पृष्ठपार्श्वे नव नवकं पृष्ठं पार्श्वे च पृष्ठपार्श्वम् तस्मिन् द्वयोः पार्श्वयोः त्रीणि त्रीणि पृष्ठे त्रीणि एवं नवकं उडुमुखे नौमुखे कुं एकं भृतौ षट् भृतिस्थाने षट् देयानि । तत्र पठाणाननशिखरतले नो सत् पठाणे नो सत् नौमुखे नो सत् शिखरे कूपमस्तके नो सत् तले नव धिष्ण्यानीष्टानि इष्टं सुकाणे मध्ये सिद्धिः मध्ये त्रयोदश भानि सिद्धिदानि पठाणे ( शठाख्ये ) भयम् इह पोतचक्रे फलज्ञैः ॥ ९४ ॥

चतुर्मण्डलानि ।

**आग्नेयं न सदंत्यपित्र्ययमभं मिश्रं भगाजांघ्रिभं**
**वायव्यं मृगदस्रवाय्वदितिभं त्वाष्ट्रार्यमार्कोडु च ।**
**ऐंद्रं मैत्रकमैंद्रमिष्टफलदं वैश्वाच्चतुष्कं तथोत्पाते**
**मूलमुपांत्यसर्पवरुणांब्वीशेज्यभं वारुणम् ॥ ५५ ॥**

आग्नेयमिति । उत्पाते त्रिविधे दिव्यान्तरिक्षभौमलक्षणे मंडलद्वयं न सत् । तत्किं, अंत्यं रेवती पित्र्यं मघा यमभं भरणी मिश्रं कृत्तिकाविशाखे भगं पूर्वाफाल्गुनी अजांघ्रिभं पूर्वाभाद्रपदा एतदाग्नेयं मण्डलम् अग्नि-सम्बन्धमण्डले उपसर्गो न सत् । च परं मृगदस्रवाय्वदितिभं त्वाष्ट्रार्य-मार्कोडु मृगशीर्षमश्विनीस्वातीपुनर्वसुचित्रोत्तराफाल्गुनीहस्तम् इदं वायव्य-मंडलं तत्रापि उत्पाते न सत् । मैत्रमनुराधा कं रोहिणी ऐंद्रं ज्येष्ठा वैश्वादुत्तराषाढायाश्चतुष्कम् उत्तराषाढाभिजिच्छ्रवणधनिष्ठा एतदैन्द्रमंडलं भवेत् तत् इष्टफलदम् । मूलमुपात्यमुत्तराभाद्रपदा सर्पे आश्लेषा वारुणं शततारका अंबु पूर्वाषाढा ईशमार्द्रा ईज्यभं पुष्यः इदं वारुणमंडलम् उत्पाते इष्टफलदम् । तथा चोक्तममृतकुंभे—' अर्यम्णचित्रादितिभैन्दवाश्विस्वा-त्योऽर्कभं चेति गणोऽनिलस्य । याम्याजपादाग्निभगोऽपि पौष्णमघा-विशाखा हुतभुग्गणोऽयम् ॥ तोयेशाहिर्बुध्न्यरक्षोम्बुपूषासर्पेशानं वारुणाग्निश्च भानि । मैत्रं ब्राह्मं वैष्णवं वासवैंद्रं वैश्वं चैन्द्रोऽयं भवर्गोऽभिजिच्च ॥' इति । फलम् । 'वायोर्गणात्कोऽपि यदोपसर्गो भवेत्तदानीं पवनोऽतिचण्डः । सिक्ता भवेद्वा रुधिरेण भूमिर्लोके नृपे चापि महानधर्मः ॥ १ ॥ वह्नेर्गणे

नेत्ररुजोऽतिसारः पृथ्व्यर्घहानिर्ज्वलनप्रकोपः । गाश्चाल्पदुग्धास्तरवोऽफलाः स्युर्गर्भप्रपातश्च नितंबिनीनाम् ॥ २ ॥ गावो बहुक्षीरघृतादियुक्ता वृक्षाः प्रजाः क्षेमसुभिक्षयुक्ताः । मेघाः प्रभूतांबुमुचो भवंति वर्गे जलेशस्य च सोपसर्गे ॥ ३॥ महेंद्रवर्गे वनितासु सौख्यं प्रजाश्च सर्वा मुदिता भवंति । निकामवर्षी मघवा धरित्री प्रभूतसस्याधिगमश्च विधात् ॥ ४ ॥' इति॥ ५५॥

घाततिथिवारनक्षत्रचन्द्राः ।

**नंपूभाभजपूरिनंजरिजपूर्घाता तिथिर्मेषभात्**
**सूशश्चंबुशशाबृशुःशुमगुशुर्वारा महस्वानुमूः ।**
**श्रूपूषांत्यभरोशिवाहिभमथो चंद्रेषुनंदाद्विषट्-**
**दिग्रामाद्रियुगाष्टरुद्ररवयो घातं भमिंदुस्तथा॥५६॥**

नमिति । मेषभात् मेषराशेः सकाशादेतास्तिथयो घाताः स्युः । ताः काः ? नं नंदा पू पूर्णा भा भद्रा भ भद्रा ज जया पू पूर्णा रि रिक्ता नं नंदा ज जया रि रिक्ता ज जया रि रिक्ता पू पूर्णा एताः तिथयः । अथ घातवारः । सू सूर्यः श शनिः चं चंद्रः बु बुधः श शनिः शा शनिः बृ बृहस्पतिः शु शुक्रः शु शुक्रः म मंगलः गु गुरुः शु शुक्रः इति घातवाराः । अथ घातभम् । म मघा ह हस्तः स्वा स्वातिः अनु अनुराधा मू मूलं श्रू श्रवणं पूषा पूर्वाषाढा अंत्यं रेवती भ भरणी रो रोहिणी शिवा आर्द्रा अहिभं आश्लेषा इति घातनक्षत्राणि । अथो अनंतरं घातचंद्रः । चंद्रः प्रथमः इषवः पंच नंदा नव द्वि द्वौ षट् षष्ठः दिक

दशमः रामस्तृतीयः अद्रिः सप्तमः युगानि चतुर्थः अष्ट अष्टमः रुद्राः एकादश रवयो द्वादश एते घातचंद्राः कथिताः । इदं यद्यपि घातचतुष्टयं निर्मूलं दृश्यते । तथापि रामज्योतिर्विदा मुहूर्तचिंतामणौ लिखितत्वात्—' भूपंचांकद्व्यंगदिग्वह्निसप्तवेदाष्टेशार्काश्च घाताख्यचंद्राः । मेषादीनां राजसेवाविवादे यात्रायुद्धोद्वाहकालेषु नूनम् ॥ ' इति ॥ ५६ ॥

शुक्रास्तादिविचारः ।

**चापेंत्ये दिनकृत्यपायनगते जीवे च सिंहस्थिते**
**बालेऽस्तेऽप्यतिचारगे स्थविरतां प्राप्ते तथा भार्गवे ।**
**सीमंतोऽन्नभुजिस्तथोपकरणं दंताब्जकौसुंभकं**
**धार्यं स्त्रीभिरिदं सदापि च परं कार्यं न कार्यं कदा५७**

चापेंत्य इति । दिनकृति सूर्ये चापे धनुषि स्थिते अंत्ये मीनगतेऽर्के वा अपायनगते दक्षिणायनगते जीवे गुरौ सिंहस्थिते वा जीवे बालेऽस्ते वाऽतिचारगे वा स्थविरतां प्राप्ते सति सीमंतकर्म अन्नभुजिः अन्नप्राशनं तथा स्त्रीभिरुपकरणं भूषणं दंतशब्देन करभूषा अब्जं मौक्तिकं कौसुंभकं वस्त्रादि इदं सदा स्त्रीभिर्धार्यं कदापि न कार्यं अत्र परिशेषविधानात् सर्वं निषिद्धमुक्तम् । तथा चोक्तं ज्योतिर्निबंधे—' नीचस्थे वक्रिते वाप्यतिचरणगते बालवृद्धास्तमे वा संन्यासो यज्ञयात्राव्रतनियमविधिः कर्णवेधोऽपि दीक्षा । मौंजीबंधोऽङ्गनानां परिणयनविधिर्वास्तुदेवप्रतिष्ठा-स्त्याज्याः सद्भिः प्रयत्नात्त्रिदशपतिगुरुर्लोपसंस्थे हरिस्थे॥ १ ॥ ' तत्र

शुक्रास्ते प्रतिप्रसवमाह—' नृत्ये याने गृहे जीर्णे प्राशनांतेषु सप्तसु । वधूप्रवेशमांगल्यं न मौढ्यं गुरुशुक्रयोः ॥२॥' वधूप्रवेश इत्युद्वाहिताया एव गृहप्रवेशः । निर्णयसिद्धांतेऽपि—' प्रागस्तादुदयात्परं सुरगुरुः पक्षेऽथ वा वार्धके बालेऽस्ते स्थविरे सिते सुरगुरौ कार्यं न कुर्यादिदम् । चौलादुद्वहनांतमालसुरथानव्यो न वध्वागमोद्योपाकर्ममहार्पणं व्रतनवोत्सर्गा हरेज्याध्वराः ॥ १ ॥ ' अन्यच्च—' अस्तंगते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे । व्रतारंभोत्सर्जनं च न कुर्यान्मौंजिबन्धनम् । वापीकूपतडागादिप्रतिष्ठा यज्ञकर्म च । गृहप्रवेशं गोदानं स्थानोत्सवमहोत्सवान् । न कुर्यान्मलमासेषु गुरुशुक्रे तथास्तगे ॥' तत्रापि सिंहस्थे गुरौ भूपालवल्लभे विशेषः कथितोऽस्ति—' अष्टाविंशतिवासरान्सुरगुरोर्वक्रातिचारे त्यजेत्सिंहे पंचनवांशकान् मृगगते पंचैव नीचांशकान् । गोदाभ्यंतरवासिनां व्रतविवाहक्षौरकार्यादिकं कार्यं तत्र सदात्र नापरतरं तीर्थं हि गोदाजलात् ॥ १ ॥ गर्भाधानादिकाः सर्वाः प्राशनांताः क्रियाश्च ताः । कर्तव्याः सर्वदेशेषु सिंहस्थे च बृहस्पतौ ॥ २ ॥ गोदावर्युत्तरे तीरे भागीरथ्याश्च दक्षिणे । विवाहादि न कर्तव्यं सिंहस्थे च बृहस्पतौ ॥३॥ वरलाभातिकालाभ्यां दुर्भिक्षाद्देशविप्लवात् । गौतम्या दक्षिणे तीरे सिंहस्थेऽप्युद्वहः शुभः ॥४॥ सिंहस्थेऽपि मघासंस्थं गुरुं यत्नेन वर्जयेत् । अन्यत्र सिंहभागेषु विवाहादि विधीयते ॥५॥ षष्टिभिर्दिवसैर्मासैः कथितो बादरायणैः । उत्तरे देवकार्याणि पितृकार्याणि चोभयोः ॥६॥ ' एवं गुरोरतिचारात्लुप्ताब्द आयाति । तथा चोक्तं मुहूर्तचिंतामणौ—' गोजांत्यकुंभेतर-

भेऽतिचारगो नो पूर्वराशिं गुरुरेति वक्रितः । तदा विलुप्ताब्द इहातिनिंदितः शुभेषु रेवासुरनिम्नगांतरे' इत्याद्यखिलमूह्यम् ॥ ५७ ॥

ग्रंथप्रशस्तिः ।

**आद्यानामनवद्यपद्यरचना नाना विचिंत्यात्मना**
**लोकानां व्यवहारदर्शनविधौ सप्तेषुवृत्तैः स्फुटम् ।**
**श्रीमद्रैवतराजपूजितपदः श्रीकाह्नजिद्वाडवः**
**सूनुस्तस्य मुहूर्तदीपमकरोदेनं महादेववित् ॥५८॥**

आद्यानामिति । महादेवः कविः एनं मुहूर्तदीपमकरोत् । किंलक्षणः श्रीमद्रैवतराजपूजितपदः श्रीकान्हजिद्वाडवः तस्य सूनुः श्रीमांश्चासौ रैवतश्च रैवताचलस्तस्य राजानः तैः पूजितौ पादौ यस्य एवंविधः कान्हजित् वाडवः तस्य सूनुः अपत्यम् । किं कृत्वाऽकरोत् आद्यानां वराहश्रीपतिलल्लुत्रिविक्रमाद्याचार्याणाम् अनवद्या या पद्यरचना ग्रंथान् रत्नमालात्रिविक्रमशतरत्नकोशव्यवहारप्रकाशसज्जनवल्लभवृत्तशतमुहूर्ततत्त्वादिनिबंधान् नाना अनेकप्रकारेण आत्मना चित्तेन विचिंत्य विचार्य । किंनिमित्तं लोकानां सर्वेषां व्यवहारमुहूर्त्तदर्शनस्य विधिर्निमित्तम् । वस्तुव्यवहारदर्शनं तु दीपेनैव भवति । तथा सप्तेषुवृत्तैः कृत्वा मुहूर्त्तदीपमकरोदिति । यथा दीपे वार्तिस्तथाऽत्र सप्तपंचाशद्वृत्तलक्षणा वार्तिस्तया हेतुभूतया ॥ ५८ ॥

**शाके रामगजेषुभूपरिमिते १५८३ सौम्यायने**
**भास्करे चैत्रे मासि सिते दले शिवतिथौ वारे**

